***श्रीमद्वल्लभाचार्यविरचितं***
***श्रीमद्ब्रह्मसूत्राणुभाष्यम्***
***द्वितीयो अध्यायः***

## Contents

## स्मृत्यनवकाशदोषप्रसङ्गः इति चेद्, न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात्॥1॥ (2।1।1)

प्रथमाध्याये वेदान्तवाक्यानां विवादास्पदानां ब्रह्मपरत्वेन समन्वयः प्रतिपादितः. अधुना श्रुतिस्मृत्यविरोधः प्रतिपाद्यते.

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधाद् वचनं वैदिकं शङ्क्यतां व्रजेत्॥

श्रुतिविप्रतिषेधस्तु अवश्यं प्रतिविधेयः. प्रथम-चतुर्थपादे सर्वथा
अनुपयोगे प्रतिपादिते, स्मृतिप्रतिपादिते स्मृतित्ववचनेन प्रामाण्ये च यावत् तदप्रामाण्यं न प्रतिपाद्यते तावत् तद् विरोधः परिहर्तुम् अशक्यइति तन्निराकरणार्थं प्रथमतः सूत्रत्रयम् आह. तुल्यबलानां परस्परविरोधे न प्रकारान्तरस्थितिः इति ततो युक्त्या श्रुतिविप्रतिषेधपरिहारः.

ततो द्वितीये पादे वेदबाधकत्वाभावेऽपि तैरपि स्वातन्त्र्येण कश्चन पुरुषार्थः सेत्स्यति इति आशङ्क्य बाह्याबाह्यमतानि एकीकृत्य निराकरोति, भ्रान्तेः तुल्यत्वात्. ततः सम्यग् वेदार्थविचारायैव वैदिकपदार्थानां क्रमस्वरूपविचारः पादद्वयेन. अतः सम्पूर्णेनापि अध्यायेन अविरोधः प्रतिपाद्यते.

कपिलादिमहर्षिकृतस्मृतेः न मन्वादिवद् अन्यत्र उपयोगः, मोक्षैकोप-योगित्वात्. तत्रापि अनवकाशे वैयर्थ्यापत्तेः इति चेद्, न. कपिलव्यतिरिक्त-
शुद्धब्रह्मकारणवाचक-स्मृत्यनवकाशदोषप्रसङ्गः. “अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा” (भग.गीता 6।7) इति॥1॥

इति द्वितीयाध्याये प्रथमपादे प्रथमं स्मृत्यधिकरणम्॥1॥

### इतरेषां चानुपलब्धेः॥2॥ (2।1।2)

प्रकृतिव्यतिरक्तानां महदादीनां लोके वेदे च अनुपलब्धेः॥2॥
इति द्वितीयाध्याये प्रथमपादे द्वितीयम् इतरेषाम् इति अधिकारणम्॥2॥

### एतेन योगः प्रत्युक्तः॥3॥ (2।1।3)

साङ्ख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता द्रष्टव्या. योगस्य वैदिकत्वशङ्कया भेदेन निराकरणम्॥3॥
इति द्वितीयाध्याये प्रथमपादे तृतीयं योगप्रत्युक्त्यधिकरणम्॥3॥

### न विलक्षणत्वाद् अस्य तथात्वं च शब्दात्॥4॥ (2।1।4)

बाधको अयं तर्कः. अस्य जगतो विलक्षणत्वाद् अचेतनत्वात् चेतनं न
कारणम्. विलक्षणत्वं शब्दात् "विज्ञातं च अविज्ञातं च" (तैत्ति.उप.2।6) इति. प्रत्यक्षस्य भ्रान्तित्वं मन्यामानस्य इदं वचनम्॥4॥
अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्॥5॥
"मृदब्रवीद्, आपोब्रुवन्" (शत.ब्राह्म.6।1।3।2।4) "तत्तेज ऐक्षत" (छान्दो.उप.6।2।3) "ते ह वाचम् उचूस्त्वं न उद्गाय" (तत्रैव 1।3। 2) इत्येवमादिश्रुतिभिः भूतेन्द्रियाणां चेतनत्वं प्रतिपाद्यते इति आशङ्क्य 'तु'शब्देन निराकरोति, तत्तदभिमानिन्यएव देवताः तथा वदन्ति. कुतः? वेदएव
"विज्ञातं चाविज्ञातं च" (तैत्ति.उप.2।6) इति चेतनाचेतनविशेषोक्तेः, अनुगतत्वाच्च. "अग्निर्वाग् भूत्वा मुखं प्राविशद्"(ऐत.उप.2।4) इत्येवमादि-विशेषानुगतिभ्याम् अभिमानित्वम् इति अर्थः. 'देवता'पदं च श्रुत्यन्तरे॥5॥
दृश्यते तु॥6॥
परिहरति. 'तु'शब्दः पक्षं व्यावर्तयति. दृश्यते हि कार्यकारणयोः वैरूप्यं, केशगोमयवृश्चिकादौ. चेतनाद् अचेतनोत्पत्तिनिषेधे तदंशस्यैव निषेधः. तुल्यांशसम्पत्तिश्चेत् प्रकृतेऽपि सदंशः॥6॥
इति द्वितीयाध्याये प्रथमपादे चतुर्थं न विलक्षणत्वाद् अधिकरणम्॥4॥

### असद् इति चेद् न प्रतिषेधमात्रत्वात्॥7॥ (2।1।5)

श्रुतौ कारणत्वेन 'असद्'उक्तम् इति चेद्, न, प्रतिषेधार्थमेव वचनम्. "कथम् असतः सद् जायेत" (छान्दो.उप.6।2।2) इति कार्यस्य वा
पूर्वप्रतिषेधो ब्रह्मकारणत्वाय॥7॥
अपीतौ तद्वत् प्रसङ्गाद् असमञ्जसम्॥8॥

पूर्वपक्षम् आह. अपीतिः लयः. कार्यस्य कारणलये तद्वत्प्रसङ्गः. स्थौल्य-सावयवत्व-परिच्छिन्नत्वाशुद्धत्वादिधर्मसम्बन्धावश्यकत्वाद् असमञ्जसं ब्रह्मकारणवचनम्॥8॥
न तु दृष्टान्तभावात्॥9॥
नैव अस्मदीये दर्शने किञ्चिद् असामञ्जस्यम् अस्ति इति 'तु'शब्देन परिहरति. स्वपक्षस्थापन-परपक्षनिराकरणयोः विद्यमानत्वाद् 'न तु' वचनम्.
ततः उत्पन्नस्य तत्र लये न कार्यावस्थाधर्मसम्बन्धः शराव-रुचकादिषु प्रसिद्धः. भवतां परं न दृष्टान्तो अस्ति॥9॥
स्वपक्षदोषाच्च॥10॥
स्वपक्षे च एते प्रतिवादिनः साधारणा दोषाः. निर्विशेषात् प्रधानात् सविशेषस्य कार्यता. तस्य उत्पत्तिः. लये तद्धर्मसम्बन्धः असत्कार्यवादप्रसङ्गः.
तथैव कार्योत्पत्तौ कारणाभावेन नियमाभावः. भावे वा मुक्तानामपि पुनः बन्धप्रसङ्गः॥10॥
तर्काप्रतिष्ठानादपि अन्यथानुमेयम् इति चेद्
एवमपि अविमोक्षप्रसङ्गः॥11॥
वेदोक्ते अर्थे शुष्कतर्केण प्रत्यवस्थानम् अयुक्तम्, तर्कस्य
अप्रतिष्ठानात्. 'तर्को' नाम स्वोत्प्रेक्षिता युक्तिः. सा एकोक्ता न अन्यैः अङ्गीक्रियते. स्वतन्त्राणाम् ऋषीणां मतिभेदाद्, वस्तुनो द्वैरूप्यासम्भवाद्, नियामकाभावाच्च. अतो न तर्कस्य प्रतिष्ठा.
पूर्वपक्षिणः परिहारः अपि अन्यथानुमेयम् इति चेत्. एवमपि अन्यथा वयम् अनुमास्यामहे यथा न अप्रतिष्ठादोषो भविष्यति. न हि कोऽपि तर्कः प्रतिष्ठितो नास्ति इति वक्तुं शक्यते, व्यवहारोच्छेदप्रसङ्गात्. "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना, यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" (मनुस्मृ.12। 106) इति स्मृतिः.
सावद्यतर्कपरिहारेण निरवद्यः तर्कः प्रतिपत्तव्यो भवति इति चेद्, एवमपि अविमोक्षप्रसङ्गः. ब्रह्मवादिनो निरवद्यतर्कसद्भावेऽपि प्रकृतिवादिनः
तर्कस्य दोषाविमोक्षप्रसङ्गः, मूलनियमाभावाद् वैमत्यस्य विद्यमानत्वात्॥11॥
इति द्वितीयाध्याये प्रथमपादे पञ्चमम् असत्प्रतिषेधाधिकरणम्॥5॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः॥12॥ (2।1।6)

साङ्ख्यमतस्य वैदिकप्रत्यासन्नत्वात् केषाञ्चित् शिष्टानां परिग्रहोऽपि अस्ति. अणु-माया-कारणवादास्तु सर्वथा न शिष्टैः परिगृह्यन्तइति तेषां तर्काः पूर्वोक्तन्यायेन सुतरामेव निरस्ता वेदितव्याः॥12॥
इति द्वितीयाध्याये प्रथमपादे षष्ठं शिष्टापरिग्रहाधिकरणम्॥6॥

## भोक्त्रापत्तेरविभागश्चेत् स्यात् लोकवत्॥13॥ (2।1।7)

कारणदोषं परिहृत्य कार्यदोषपरिहारार्थम् आरम्भः. भोग्यस्य भोक्त्रापत्तिः. ब्रह्मणो निर्विशेषस्य कारणत्वाद् भोक्तुः भोग्यत्वं, भोग्यस्य च भोक्तृत्वम् आपद्यते. *अतो न विभागः इति चेत्, स्यात् लोकवत्. यथा लोके कटककुण्डलादीनां सुवर्णकारणत्वेन सुवर्णानन्यत्वेऽपि न कटकस्य कुण्डलत्वम् एवम् न भोग्यस्य भोक्तृत्वम्॥13॥

इति द्वितीयाध्याये प्रथमपादे सप्तमं भोक्त्रापत्तेः इति अधिकरणम्॥7॥

## तदनन्यत्वम् 'आरम्भण'शब्दादिभ्यः॥14॥ (2।1।8)

श्रुतिविरोधं परिहरति. "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छान्दो.उप.6।1।1) इति. तत्र विकारो वाङ्मात्रेणैव आरभ्यते, न वस्तुतः इति अर्थः प्रतिभाति. तथाच सति कस्य ब्रह्म कारणं भवेत्? अतः श्रुतिवाक्यस्य अर्थम् आह आरम्भणशब्दादिभ्यः तदनन्यत्वं प्रतीयते. कार्यस्य कारणानन्यत्वं न पुनः मिथ्यात्वम्.

ये पुनः मिथ्यात्वं तामसबुद्धयः प्रतिपादयन्ति तैः ब्रह्मवादाः सूत्र-श्रुतिनाशनेन तिलापः कृता वेदितव्याः. अन्तःप्रविष्टचोरवधार्थमेव एषः आरम्भः. अलौकिकप्रमेये सूत्रानुसारेणैव निर्णयः उचितः, न स्वतन्त्रतया किञ्चित् परिकल्पनम्. "तर्काप्रतिष्ठानाद्" इति निराकृतमेव. नवा अस्मिन्नपि सूत्रे मिथ्यात्वार्थः सम्भवति, एकविज्ञानेन सर्वविज्ञानोपक्रमबाधात् प्रकरणविरोधश्च. त्रयाविरोधभयपरित्यागेन एकम् इदं सूत्रम् अन्यथा योजयन् अतिधृष्टः इति अलं विस्तरेण॥14॥

भावे चोपलब्धेः॥15॥

भावएव विद्यमानएव घटे घटोपलब्धिः, न अभावे. 'च'कारात् "मृत्तिकेत्येव" (छान्दो.उप.6।1।4) श्रुतिः परिगृहीता. वाङ्मात्रेण च उपलम्भे मिथ्यैव अत्र घटोपि अस्ति इति उक्ते उपलभ्येत.

इदं सूत्रं मिथ्यावादिना न ज्ञातमेव. अतएव पाठान्तरकल्पनम्॥15॥

सत्वाच्च अवरस्य॥16॥

अवरस्य प्रपञ्चस्य सत्वात् त्रैकालिकत्वाद् ब्रह्मत्वम्. "सदेव सौम्येदमग्र आसीत्. यदिदं किञ्च तत् सत्यम् इत्याचक्षते" (छान्दो.उप.6।2।1) इति श्रुतेः॥16॥

इति द्वितीयाध्याये प्रथमपादे अष्टमं तदनन्यत्वाधिकरणम्॥8॥

असद्व्यपदेशान्नेति चेद्, न,

## धर्मान्तरेण वाक्यशेषात्॥17॥ (2।1।9)

"असद् वा इदम् अग्र आसीद्" (तैत्ति.उप.2।7) इति श्रुत्या प्राग् उत्पत्तेः कार्यस्य असत्वं बोध्यते इति चेद्, न. अव्याकृतत्वेन धर्मान्तरेण तथाव्यपदेशः. कुतः? वाक्यशेषात्. "तद्

आत्मानं स्वयम् अकुरुत” (तैत्ति.
उप.2।7) इति स्वस्यैव क्रियमाणात्वात्. “इदमासीत्”(तत्रैव) पदप्रयोगाच्च ॥17॥
युक्तेः शब्दान्तराच्च॥18॥
युक्तिः तावत् समवेतमेव कार्यं सद् उत्पाद्यते इति सम्बन्धस्य द्विनिष्ठत्वाद् नित्यत्वाच्च कारणान्तरेणापि परम्परया सम्बन्धः.
असम्बद्धोत्पत्तौतु मिथ्यात्वमेव. प्रवृत्तिस्तु अभिव्यक्त्यर्थम् इति. शब्दान्तरं ‘सत्’शब्दाद् ‘आत्म’शब्दः. “आत्मानं स्वयम् अकुरुत” (तैत्ति.उप.2।7) इति॥18॥
पटवच्च॥19॥
यथा संवेष्टितः पटो न व्यक्तं गृह्यते, विस्तृतस्तु गृह्यते, तथा आविर्भावानाविर्भावेन जगतोऽपि॥19॥
यथा च प्राणादिः॥20॥
यथा प्राणापानानां नियमने जीवनमात्रम्, अनियमने आकुञ्चनादि. न एतावता प्राणभेदः, पूर्वम् असत्वं वा. तथा जगतोऽपि. ज्ञानक्रियाभेदात् सूत्रद्वयम् ॥20॥
इति द्वितीयाध्याये प्रथमपादे नवमम् असदव्यपदेशाधिकरणम्॥9॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः॥21॥ (2।1।10)

ब्रह्मणो जगत्कारणत्वे इतरस्य जीवस्यापि ब्रह्मत्वात् तद्धितं कर्तव्यम्.
तद् न करोतीति तदकरणादिदोषप्रसक्तिः. “तत्सृष्ट्वा तदेवानुप्राविशद्” (तैत्ति.उप.2।6) “अनेन जीवेन आत्मना अनुप्रविश्य नामरूपे व्याकरवाणि” (छान्दो.उप.6।3।2) इति तस्यैव जीवव्यपदेशात्॥21॥
अधिकन्तु भेदनिर्देशात्॥22॥
‘तु’शब्दः पक्षं व्यावर्तयति. यदि ब्रह्म तावन्मात्रं भवेत् तदा अयं दोषः. तत् पुनः जीवाद् जगतश्च अधिकम्. कुतः? भेदनिर्देशात्. द्रष्टव्यादि- (बृहदा.उप.2।4।5)-वाक्येषु कर्मकर्तृव्यपदेशाद् विज्ञानानन्दव्यपदेशाद् वा. नहि सम्पूर्णो अंशस्य हितं नियमेन करोति, सर्वेन्द्रियव्यापाराभावप्रसङ्गात्.
स्वलीलया एकन्तु करोत्येव॥22॥
अश्मादिवच्च तदनुपपत्तिः॥23॥
पार्थिवत्वाविशेषेऽपि हीर-माणिक्य-पाषाणानां पलाश-चम्पक-चन्दनानाम् उच्चनीचत्वम् एवं जीवस्य अंशत्वाविशेषेऽपि ब्रह्मादि-स्थावरान्तानाम् उच्चनीचत्वम्. कार्यवैलक्षण्यं तदननुरोधश्च दर्शितः॥23॥
इति द्वितीयाध्याये प्रथमपादे दशमम् इतरव्यपदेशाधिकरणम्॥10॥

## उपसंहारदर्शनाद् न इति चेद् न क्षीरवद्धि॥24॥ (2।1।11)

ब्रह्म एकमेव जगत्कारणम् इति उक्तम्. तद् न उपपद्यते, कुलालादेः
चक्रादिसाधनान्तरस्य उपसंहारदर्शनात् सम्पादनदर्शनाद् इति चेद्, न, क्षीरवद्धि. यथा क्षीरं कर्तारम् अनपेक्ष्य दधिभवनसमये दधि भवति. एवमेव ब्रह्मापि कार्यसमये स्वयमेव सर्वं भवति॥24॥
देवादिवदपि लोके॥25॥
स्वतो अभिन्नकरणे दृष्टान्तः. यथा देवर्षिपितरो बाह्यनिरपेक्षाएव स्वयोगबलेन सर्वं कुर्वन्ति एवं ब्रह्मापि अनपेक्ष्य तत्समवायं स्वतएव सर्वं करोति॥25॥
कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा॥26॥
यदि एकमेव ब्रह्म स्वात्मानमेव जगत् कुर्यात् तदा कृत्स्नं ब्रह्म एकमेव कार्यं भवेत्. अथ अंशभेदेन व्यवस्था, तथा सति निरवयवत्वश्रुतिविरोधः. "निष्कलं निष्क्रियं शान्तम्" (श्वेता.उप.6।19) इति॥26॥
श्रुतेस्तु शब्दमूलत्वात्॥27॥
'तु'शब्दः पक्षं व्यावर्तयति. श्रुतेः श्रूयतएव द्वयमपि. नच श्रुतं युक्त्या बाधनीयम्, शब्दमूलत्वात् शब्दैकसमधिगम्यत्वात्.
"अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्" (महाभा.5।2।12) "अर्वाचीन-विकल्प-वितर्क-विचार-कुतर्क-प्रमाणाभास-शास्त्र-कलिलान्तःकरण-दुरवग्रहवादिनां वादानवसरे सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च" (भाग.पुरा.6।9।36).
एवं परिहृतेऽपि दोषे स्वमत्या अनुपपत्तिम् उद्भाव्य सर्वसम्प्लवं वदन् मन्दमतिः सद्भिः उपेक्ष्यः॥27॥
आत्मनि चैवं विचित्राश्च हि॥28॥
सृष्टौ देशकालापेक्षापि नास्ति, आत्मन्येव सृष्टत्वात्. देश-काल-सृष्टावपि आत्मन्येव साधिकरणस्य सृष्टत्वाच्च. बहिरन्तश्च जगत्सृष्टिं वा आह विशेषाभावेन, "अनन्तरो अबाह्यः" (बृ.उप.4।5।13) इति. विरोधाभावो
विचित्रशक्तियुक्तत्वात् सर्वभवनसमर्थत्वाच्च॥28॥
स्वपक्षदोषाच्च॥29॥
प्रधानवादिनोऽपि सर्वपरिणाम-सावयवत्वानित्यत्वादिदोषो दुष्परिहरः, वृत्तिमूलत्वाच्च तस्य, अचिन्त्यकल्पनायां प्रमाणाभावाच्च॥29॥
इति द्वितीयाध्याये प्रथमपादे एकादशम् उपसंहारदर्शनाधिकरणम्॥11॥

## सर्वोपेता च तद्दर्शनात्॥30॥ (2।1।12)

सर्वशक्तिभिः उपेता उपगतः. 'च'कारात् सत्यादिगुणयुक्तश्च.
कुतः? तद्दर्शनात्. तथा वेदे दृश्यते. "यः सर्वज्ञः सर्वशक्तिः सर्वकर्ता सर्वकामः" (छान्दो.उप.3।14।2) इत्यादि॥30॥

विकरणत्वान्नेति चेत् तदुक्तम्॥31॥

कर्ता इन्द्रियवान् लोके. ब्रह्मणो निरिन्द्रियत्वात् कथं कर्तृत्वम्? इति चेद्, न, अस्य परिहारः पूर्वमेव उक्तः "श्रुतेस्तु शब्दमूलत्वाद्"(ब्रह्मसू.2।1।27) इत्यत्र. अनवगाह्यमाहात्म्ये श्रुतिरेव शरणं, न अन्या वाचोयुक्तिः इति॥31॥

न प्रयोजनवत्वात्॥32॥

न ब्रह्म जगत्कारणम्. कुतः? प्रयोजनवत्वात्. कार्यं हि प्रयोजनवद्
दृष्टं लोके. ब्रह्मणि पुनः प्रयोजनवत्त्वं सम्भावयितुमपि न शक्यते, आप्तकाम(बृहदा.उप.4।3।21)-श्रुतिविरोधात्. व्यधिकरणो हेतुः न समासो वा ॥32॥

लोकवत्तु लीला कैवल्यम्॥33॥

'तु'शब्दः पक्षं व्यावर्तयति. लोकवद् लीला. नहि लीलायां किञ्चित् प्रयोजनम् अस्ति, लीलायाएव प्रयोजनत्वात्. ईश्वरत्वादेव न लीला पर्यनुयोक्तुं शक्या. सा लीला कैवल्यं मोक्षः. तस्य लीलात्वेऽपि अन्यस्य तत्कीर्तने मोक्षः
इति अर्थः. लीलैव केवला इति वा॥33॥

वैषम्य-नैर्घृण्ये न सापेक्षत्वात् तथाहि दर्शयति॥34॥

कांश्चित् सुखिनः कांश्चित् दुःखिनश्च, प्रलयञ्च कुर्वन् विषमो निर्घृणश्च इति चेद्, न, सापेक्षत्वात्. जीवानां कर्मानुरोधेन सुख-दुःखे प्रयच्छति इति. वादिबोधनाय एतद् उक्तम्. वस्तुतस्तु आत्मसृष्टेः वैषम्य-नैर्घृण्यसम्भावनैव नास्ति. वृष्टिवद् भगवान्, बीजवत् कर्म. श्रुतिरेव तथा दर्शयति. "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति, एष उ एवासाधु कर्म कारयति तं यमधो निनीषति" (कौषी.उप.3।8), "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन कर्मणा" (बृहदा.उप.3।2।13) इति च. सापेक्षमपि कुर्वन् ईश्वरइति माहात्म्यम्॥34॥

न कर्माविभागाद् इति चेन्नानादित्वात्॥35॥

न कर्म विभागात् कार्योद्गमात् पूर्वं सम्भवति, पश्चात्तु अन्योन्याश्रयः इति चेद्, न, अनादित्वात्. बीजाङ्कुरवत् प्रवाहस्य अनादित्वात्॥35।

उपपद्यते चाप्युपलभ्यते च॥36॥

कथम् अनादित्वम्? इति चेद्, उपपद्यते. अन्यथा कस्य संसारः?
कृतहानिः अकृताभ्यागमप्रसङ्गश्च. उपलभ्यते च श्रुतिस्मृत्योः. "अनेन जीवेन आत्मना"(छान्दो.उप.6।3।2) इति सर्गादौ 'जीव'प्रयोगाद् अनादित्वम्. "तपसैव यथा पूर्वं स्रष्टा विश्वम् इदं भवान्"(भाग.पुरा.3।12।18) इति च॥36॥

सर्वधर्मोपपतेश्च॥37॥

उपसंहरति. वेदोक्ताः धर्माः सर्वे ब्रह्मणि उपपद्यन्ते, सर्वसमर्थत्वाद् इति॥37॥12॥

इति द्वितीयाध्याये प्रथमपादे द्वादशं सर्वोपेताधिकरणम्॥12॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये

द्वितीयाध्यायस्य प्रथमः पादः॥2।1॥

## *द्वितीयो अध्यायः द्वितीयः पादः*

### रचनानुपपत्तेश्च न अनुमानम्॥1॥ (2।2।1)

स्वतन्त्रतया सर्वे वादाः निराक्रियन्ते अस्मिन् पादे.

लोकानां भूर्भुवादीनाम् अचेतनेन केवलेन प्रधानेन रचना न उपपद्यते. रचितत्वादेव न परिणामः, सर्वस्य संश्लेषप्रसङ्गात्. अतः चेतनकर्तृका रचना न अचेतनेन प्रधानेन कर्तुं शक्या. तस्मात् कारणत्वेन प्रधानं न अनुमातव्यम्. अन्यथोपपत्या बाधितेमव अनुमानम् इति 'च'कारार्थः॥1॥

प्रवृत्तेश्च॥2॥

भुवनानि विचार्य जनान् विचारयति. सर्वस्य तत्परिणामे प्रवृत्तिः न उपपद्यते प्रधानस्य वा प्रथमप्रवृत्तिः. यद्यपि प्रधानकारणवादे फलपर्यन्तम् अङ्गीक्रियमाणे न किञ्चिद् दूषणम्, कृतिमात्रस्य प्रधानविषयत्वात्, तथापि वादिनं प्रति लोकन्यायेन वक्तव्यम्.

तत्र लोके चेतनाचेतनव्यवहारो अस्ति. चेतनाः चतुर्विधा जीवाः सशरीराः अलौकिकाश्च. अन्ये अचेतनाः. तन्न्यायेन विचारो अत्रेति न किञ्चिद् विचारणीयम्॥2॥

पयोम्बुवच्चेत् तत्रापि॥3॥

यथा पयो विचित्रफेनरचनां करोति, यथा वा नद्यादिजलं स्वतएव स्पन्दते इति चेद्, न, तत्रापि दोहनाधिश्रयणे मेघानां चेतनानामेव सत्त्वात्.

व्याख्यानान्तरेतु 'अन्नाम्बुवद्' इति उच्येत.

द्वितीयस्य समाधानं न उभयवादिसम्मतम्॥3॥

व्यतिरेकानवस्थितेश्च अनपेक्षत्वात्॥4॥

प्रधानस्य अन्यापेक्षाभावात् सर्वदा कार्यकरणमेव, न व्यतिरेकेण तूष्णीम् अवस्थानम् उचितम्, पुरुषाधिष्ठानस्यतु तुल्यत्वात्. सेश्वरसाङ्ख्यमतेऽपि ऐश्वर्यं तदधीनमिति यथास्थितमेव दूषणम्॥4॥

अन्यत्राभावाच्च न तृणादिवत्॥5॥

तृण-पल्लव-जलानि स्वभावादेव परिणमन्ते एवमेव प्रधानम् इति न मन्तव्यम्, अन्यत्र शृङ्गादौ दुग्धस्य अभावात्. 'च'कारात् चेतनक्रियापि अस्ति. ततश्च लोकदृष्टान्ताभावाद् अचेतनं प्रधानं न कारणम्॥5॥

अभ्युपगमेप्यर्थाभावात्॥6॥

प्रधानकारणवादाङ्गीकारेऽपि प्रेक्ष्यकारित्वाभावाद् न पुरुषार्थः सिद्ध्यति ॥6॥

इति द्वितीयाध्याये द्वितीयपादे प्रथमं रचनानुपपत्तेः इति अधिकरणम्॥1॥

## पुरुषाश्मवद् इति चेत् तथापि॥7॥ (2।2।2)

प्रधानस्य केवलस्य कारणवादो निराकृतः. पुरुषप्रेरितस्य कारणत्वम् आशङ्क्य परिहरति. पुरुषः पङ्गुः अन्धम् आरुह्य अन्योन्योपकाराय गच्छति, यथा वा अयःकान्तः सन्निधिमात्रेण लोहे क्रियाम् उत्पादयति एवमेव पुरुषाधिष्ठितं पुरुषसन्निहितं वा प्रधानं प्रवर्तिष्यते इति चेत्, तथापि दोषः तदवस्थः. प्रधानप्रेरकत्वं पुरुषस्य स्वाभाविकं प्रधानकृतं वा. आद्ये प्रधानस्य अप्रयोजकत्वम्. द्वितीये प्रधानदोषः तदवस्थः. नित्यसम्बन्धस्य विशिष्टकारणत्वे अनिर्मोक्षः. अशक्तस्यतु मोक्षाङ्गीकारः सर्वथा अनुपपन्नः॥7।

अङ्गित्वानुपपत्तेश्च॥8॥

प्रकृतिपुरुषयोः अङ्गाङ्गित्वे भवेदपि एवम्. तच्च न उपपद्यते. पुरुषस्य अङ्गित्वे ब्रह्मवादप्रवेशो मतहानिश्च. प्रकृतेः अङ्गित्वेतु अनिर्मोक्षः. अनेन परिहृतोऽपि मायावादो निर्लज्जानां हृदये भासते॥8॥

अन्यथानुमितौ च ज्ञशक्तिवियोगात्॥9॥

अन्यथा वयं सर्वम् अनुमिमीमहे यथा सर्वे दोषाः परिहृताः भवेयुः इति चेत्, तथापि पूर्वं ज्ञानशक्तिः नास्ति इति मन्तव्यम्. तथा सति बीजस्यैव अभावाद् नित्यत्वाच्च अनिर्मोक्षः इति॥9॥

विप्रतिषेधाच्च असमञ्जसम्॥10॥

परस्परविरुद्धत्वात् मतवर्तिनां पञ्चविंशादिपक्षाङ्गीकारात्. वस्तुतस्तु अलौकिकार्थे वेदएव प्रमाणं न अन्यद् इति॥10॥

इति द्वितीयाध्याये द्वितीयपादे द्वितीयं पुरुषाश्मवद् इति अधिकरणम्॥2॥

## महद्दीर्घवद् वा ह्रस्वपरिमण्डलाभ्याम्॥11॥ (2।2।3)

इदानीं परमाणुकारणवादो निराक्रियते. तत्र स्थूलकार्यार्थं प्रथमं परमाणुद्वयेन द्व्वणुकम् आरभ्यते. परमाणुद्वयसंयोगे द्व्वणुकं भवति इति अर्थः. तत्र उपर्यधोभावमिलने द्व्वणुकं महत् स्याद्, द्विगुणपरिमाणवत्त्वात्. प्राक्-पश्चान्मिलने दीर्घवद् वा स्यात्. परमाणुपरिमाणं ह्रस्वं परितोमण्डलं च. उपहासार्थं तस्य मतस्य अनुवादः॥11॥

किम् अतो यदि एवम्? अतः आह

उभयथापि न कर्मातस्तदभावः॥12॥

उभयथापि न. कुतः? न कर्म. ‘न’कारो देहलीप्रदीपन्यायेन उभयत्र सम्बद्ध्यते. अतो द्व्वणुकाभावः. उभयथापि न परमाणु-सङ्घट्टनं, प्रदेशाभावात्. कल्पना मनोरथमात्रम्. असंयुक्तांशाभावात् तदेव तत् स्यात्. संयोगजनकं कर्मापि न सम्भवति, कारणान्तराभावात्. प्रयत्नवद् आत्मसंयोगे अदृष्टवद् आत्मसंयोगे च अभ्युपगम्यमाने

निरवयवत्वात् तदेव तत् स्यात्. विशेषाभावाद् विभागस्य अशक्यत्वाच्च. अतो द्व्यणुकस्य अभावः॥12॥

समवायाभ्युपगमाच्च साम्याद् अनवस्थितेः॥13॥

परमाणु-द्व्यणुकयोः समवायो अङ्गीक्रियते. सः सम्बन्धिनोः अवस्थानम् अपेक्ष्य, सम्बन्धस्य उभयनिष्ठत्वात्. सच नित्यः सदा सम्बन्धिसत्वम् अपेक्षते. अतोऽपि न द्व्यणुकम् उत्पद्यते. किञ्च, समवायो न अङ्गीकर्तुं शक्यः, संयोगेन तुल्यत्वात्, सम्बन्धत्वात् तस्य. यथा सम्बन्धिनि सम्बन्धान्तरापेक्षा एवं समवायस्यापि. तथा सति अनवस्थितिः॥13॥

नित्यमेव च भावात्॥14॥

परमाणोः कारणान्तरस्य च नित्यमेव भावात् सदा कार्यं स्यात्॥14॥

रूपादिमत्त्वाच्च विपर्ययो अदर्शनात्॥15॥

यद् रूपादिमत् तद् अनित्यम्. परमाणोरपि रूपादिमत्त्वाद् विपर्ययः. अनित्यत्वम् अपरमाणुत्वञ्च. नच प्रमाणबलेन तदतिरिक्ते अव्याप्तिः इति वाच्यम्, अदर्शनात्. कार्यानुपपत्तिः श्रुत्यैव परिहृता॥15॥

उभयथापि च दोषात्॥16॥

परमाणूनां रूपादिमत्त्वे तदभावे च दोषः. एकत्र अनित्यत्वम् अन्यत्र कार्यरूपस्य निर्मूलत्वं च. हरिद्राचूर्णसम्बन्धे रूपान्तरस्य जननात् विरोधोऽपि ‘च’कारार्थः॥16॥

अपरिग्रहाच्च अत्यन्तम् अनपेक्षा॥17॥

सर्ववैदिकानाम् अपरिग्रहाच्च अत्यन्तं सर्वथा न अपेक्ष्यते॥17॥

इति द्वितीयाध्याये तृतीयं महद्दीर्घवद् वा इति अधिकरणम्॥3॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः॥18॥ (2।2।4)

अतः परं बाह्यमतनिराकरणम्. ते समुदायद्वयं जीवभोगार्थं संहन्यते इति मन्यन्ते. परमाणुसमूहः पृथिव्यादिभूतसमुदायः एकः. रूपादिस्कन्ध-समुदायश्च अपरः. रूप-विज्ञान-वेदना-सञ्ज्ञा-संस्कार-सञ्ज्ञकाः पञ्च स्कन्धाः. तदुभयसम्बन्धे जीवस्य संसारः, तदपगमे मोक्षः इति. तत्र उभयहेतुकेऽपि समुदाये जीवस्य तदप्राप्तिः क्षणिकत्वात्. सर्वक्षणिकत्वे जीवमात्रक्षणिकत्वे वा तदप्राप्तिः॥18॥

इतरेतरप्रत्ययत्वाद् इति चेद्, न, उत्पतिमात्रनिमित्तत्वात्॥19॥

सर्वक्षणिकत्वेऽपि पूर्वपूर्वस्य उत्तरोत्तरप्रत्ययविषयत्वात् कारणत्वात् सन्ततेरेव जीवत्वाद् जडत्वाच्च न कापि अनुपपत्तिः इति चेद्, न, उत्पत्तिमात्र-निमित्तत्वात्. अनुसन्धानाभ्युपगमे स्थिरत्वापतिः. सम्बन्धवियोगार्थं को वा यतेत. स्थैर्याभावात् समुदायानुपपत्तिश्च॥19॥

उत्तरोत्पादे च पूर्वनिरोधात्॥20॥

उत्तरोत्पत्तिरपि न सम्भवति. उत्पन्नस्य खलु उत्पादकत्वम्. अतः उत्तरोत्पतिसमये पूर्वस्य नष्टत्वाद् उत्पत्तिक्षणएव स्थिति-प्रलय-कार्यकरण-सर्वाङ्गीकारे विरोधाद् एकमपि न स्यात्॥20॥

असति प्रतिज्ञोपरोधो यौगपद्यम् अन्यथा॥21॥

एका क्षणिकत्वप्रतिज्ञा. अपरा चतुर्विधान् हेतून् प्रतीत्य चित्तचैता('चित्तचैत्या' इति पुरुपाठः.) उत्पद्यन्ते इति. वस्तुनः क्षणान्तरसम्बन्धे प्रथमप्रतिज्ञा नश्यति. असति द्वितीया. द्वितीया चेद् न अङ्गीक्रियते तदा प्रतिबन्धाभावात् सर्वं सर्वतः एकदैव उत्पद्येत॥21॥

प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्॥22॥

अपिच वैनाशिकाः कल्पयन्ति. बुद्धिबोध्यं त्रयाद् अन्यत् संस्कृतं क्षणिकं च इति. त्रयं पुनः निरोधद्वयम् आकाशं च. तत्र इदानीं निरोधद्वयाङ्गीकारं दूषयति. प्रतिसङ्ख्यानिरोधो नाम भावानां बुद्धिपूर्वको विनाशः. विपरीतो अप्रतिसङ्ख्यानिरोधः. त्रयमपि निरुपाख्यम्. निरोधद्वयमपि न प्राप्नोति, सन्ततेः अविच्छेदात्. पदार्थानां च नाशकसम्बन्धाभावात् प्रतिबन्ध-सम्बन्धाभावः. आद्यनिरोधः पदार्थविषयको व्यर्थः. द्वितीयः क्षणिकाङ्गीकारेणैव सिद्धत्वाद् न अङ्गीकर्तव्यः॥22॥

उभयथा च दोषात्॥23॥

प्रतिसङ्ख्यानिरोधान्तार्गताविद्याविनाशे मोक्षः इति क्षणिकवादिनो मिथ्यावादिनश्च मन्यन्ते. अविद्यायाः सपरिकरायाः निर्हेतुकविनाशे शास्त्रवैफल्यम्. अविद्यातत्कार्यातिरिक्तस्य अभावाद् न सहेतुकोऽपि. न हि वन्ध्यापुत्रेण रज्जुसर्पो नाश्यते. अतः उभयथापि दोषः॥23॥

आकाशे च अविशेषात्॥24॥

यच्च उक्तम् आकाशमपि आवरणाभावो निरुपाख्यम् इति तत्र आकाशेऽपि सर्वपदार्थवद् वस्तुत्वव्यवहारस्य अविशेषात्॥24॥

अनुस्मृतेश्च॥25॥

सर्वोऽपि क्षणिकवादो बाधितः. "सएव अयं पदार्थः" इति अनुस्मरणात्. अनुभव-स्मरणयोः एकाश्रयत्वम् एकविषयत्वञ्च॥25॥

न असतो अदृष्टत्वात्॥26॥

अपिच, न अनुपमर्द्य प्रादुर्भावं वैनाशिकाः मन्यन्ते. ततश्च असतो अलीकात् कार्यं स्यात्. तद् न, अदृष्टत्वात्. न हि शशशृङ्गादिभिः किञ्चित् कार्यं दृश्यते. एवं सतः कारणत्वं पूर्वपादे उपपाद्य, असतः कारणत्वं निराकृत्य व्यासचरणैः वेदानाम् अव्याकुलत्वे सम्पादितेऽपि पुनः दैत्यव्यामोहनार्थं प्रवृत्तस्य भगवतो बुद्धस्य आज्ञया "त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय" (वरा. पुरा.70।36), "अतथ्यानि वितथ्यानि दर्शयस्व महाभुज, स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु"(पद्म.पुरा.उ.खं.71।107) इत्येवंरूपया, महादेवादयः स्वांशेन अवतीर्य, वैदिकेषु प्रविश्य, विश्वासार्थं वेदभागान् यथार्थानपि व्याख्याय, सदसद्विलक्षणाम् 'असद्'अपरपर्यायाम् अविद्यां सर्वकारणत्वेन स्वीकृत्य, तन्निवृत्यर्थं जातिभ्रंशरूपं

सन्न्यासपाषण्डं प्रसार्य, सर्वमेव लोकं व्यामोहितवन्तः. व्यासोऽपि कलहं कृत्वा शङ्करं शप्त्वा तूष्णीम् आस. अतो अग्निना मया सर्वतः सदुद्धारार्थं यथाश्रुतानि श्रुति-सूत्राणि योजयता सर्वो मोहो निराकृतो वेदितव्यः. प्रथमाध्यायएव तन्मतम् अनूद्य विस्तरेण निराकृतमिति न अत्र उच्यते॥26॥

उदासीनानामपि च एवं सिद्धिः॥27॥

यदि अभावाद् भावोत्पत्तिः अङ्गीक्रियते तथा सति उदासीनानामपि साधनरहितानां सर्वोऽपि धान्यादिः सिद्ध्येत, अभावस्य सुलभत्वात्॥27॥

इति द्वितीयाध्याये द्वितीयपादे चतुर्थं समुदाय उभयहेतुकेऽपि इति अधिकरणम्॥4॥

## न अभाव उपलब्धेः॥28॥ (2।2।5)

एवं कारणासत्त्वं निराकृत्य विज्ञानवाद्यभिमतं प्रपञ्चासत्यत्वं निराकरोति. सच ज्ञानातिरिक्तः प्रपञ्चो नास्ति इति आह. तद् न, अस्य प्रपञ्चस्य न अभावः, उपलब्धेः. उपलभ्यते हि प्रपञ्चः. यस्तु उपलभमानएव "न अहम् उपलभ" इति वदति सः कथम् उपादेयवचनः स्यात्?॥28॥

वैधर्म्याच्च न स्वप्नादिवत्॥29॥

ननु उपलब्धिमात्रेण न वस्तुसत्त्वं, स्वप्न-माया-भ्रमेषु अन्यथा दृष्टत्वाद् इति चेद्, न, वैधर्म्यात्. स्वप्नादिषु तदानीमेव स्वप्नान्ते वा वस्तुनो अन्यथा-भावोपलम्भात्. न तथा जागरिते. वर्षानन्तरमपि दृश्यमानः स्तम्भः स्तम्भएव. स्वस्य मोक्षे प्रवृत्तिव्याघातः 'च'कारार्थः॥29॥

न भावो अनुपलब्धेः॥30॥

*यदपि उच्यते, बाह्यार्थव्यतिरेकेणापि वासनया ज्ञानवैचित्र्यं भविष्यति इति, तद् न, वासनानां न भावः उपपद्यते. त्वन्मते बाह्यार्थस्य अनुपलब्धेः. उपलब्धस्य हि वासनाजनकत्वम्. अनादित्वेऽपि अन्धपरम्परान्यायेन अप्रतिष्ठैव. अर्थव्यतिरेकेण वासनायाः अभावाद् वासनाव्यतिरेकेणापि अर्थोपलब्धेः अन्वय-व्यतिरेकाभ्याम् अर्थसिद्धिः॥30॥

क्षणिकत्वाच्च॥31॥

वासनायाः आधारोऽपि नास्ति, आलयविज्ञानस्य क्षणिकत्वाद्, वृत्तिविज्ञानवत्. एवं सौत्रान्तिको विज्ञानवादी च प्रत्युक्तः. माध्यमिकस्तु मायावादिवद् अत्यसम्बद्धभाषित्वाद् उपेक्ष्यइति न निराक्रियते आचार्येण॥31॥

सर्वथानुपपत्तेश्च॥32॥

किं बहुना, बाह्यवादो यथा-यथा विचार्यते तथा-तथा असम्बद्धएवेति अलं विस्तरेण. 'च'काराद् वेदविरोधो मुख्यः॥32॥

इति द्वितीयाध्याये द्वितीयपादे पञ्चमं नाभावः उपलब्धेः इति अधिकरणम्॥5॥

## नैकस्मिन् असम्भवात्॥33॥ (2।2।6)

विवसनसमयो निराक्रियते. ते हि अन्तर्निष्ठाः प्रपञ्चे उदासीनाः सप्त विभक्तीः परेच्छया वदन्ति. ‘स्यात्’शब्दो अभीष्टवचनः. अस्ति-नास्त्यवक्तव्यानां प्रत्येक-समुदायाभ्यां ‘स्यात्’पूर्वकः सप्तप्रकारो भवति. तद् एकस्मिन् योजयन्ति. तद्विरोधेन असम्भवाद् अयुक्तम्॥33॥

एवं च आत्मा अकार्त्स्न्यम्॥34॥

ननु कथं बहिः उदासीनस्य तद्दूषणम्? अत आह. एवमपि सति *आत्मनो वस्तुपरिच्छेदाद् अकार्त्स्न्यं न सर्वत्वम्. अथवा शरीरपरिमाण आत्मा चेत् तदा सर्वशरीराणाम् अतुल्यत्वाद् आत्मनो न कार्त्स्न्यं न कृत्स्नशरीरतुल्यत्वम्॥34॥

न च पर्यायादपि अविरोधो विकारादिभ्यः॥35॥

शरीराणाम् अवयवोपचयापचयानुसारेण आत्मनोऽपि देव-तिर्यङ्-मनुष्येषु अवयवोपचयापचयाभ्यां तत्तुल्यता स्यात्. तथा सति पर्यायेण अविरोधः इति न वक्तव्यम्. तथा सति विकारापत्तेः. सङ्कोच-विकासेऽपि विकारस्य दुष्परिहरत्वात्॥35॥

अन्त्यावस्थितेश्च उभयनित्यत्वाद् अविशेषः॥36॥

अन्त्यावस्थितिः मुक्तिसमयावस्थितिः. तस्माद् हेतोः. पूर्वदोष-परिहाराय च उभयनित्यत्वं भवेद् अणुत्वं वा, महत्त्वं वा. उभयथापि शरीर-परिमाणो न भवतीति न तव अर्थसिद्धिः॥36॥

इति द्वितीयाध्यायः द्वितीयपादे षष्ठं नैकस्मिन्नसम्भवाद् इति अधिकरणम्॥6॥

## पत्युरसामञ्जस्यात्॥37॥ (2।2।7)

पराभिप्रेतान् जडजीवान् निराकृत्य ईश्वरं निराकरोति.

वेदोक्ताद् अणुमात्रेऽपि विपरीतन्तु यद् भवेत् ।
तादृशं वा स्वतन्त्रं चेद् उभयं मूलतो मृषा ॥

तार्किकादिमतं निराकरोति. पतिश्चेद् ईश्वरः तस्माद् भिन्नः तदा विषमकरणाद् वैषम्य-नैर्घृण्ये स्याताम्. कर्मापेक्षायान्तु अनीश्वरत्वम्. युक्तिमूलत्वात् दोषः. असामञ्जस्याद् हेतोः न पतित्वेन ईश्वरसिद्धिः॥37॥

सम्बन्धानुपपतेश्च॥38॥

जीवब्रह्मणोः विभुत्वाद्, अजसंयोगस्य अनिष्टत्वात् पतित्वानुपपत्तिः. तुल्यत्वादपि अनुपपत्तिः इति ‘च’कारार्थः॥38॥

अधिष्ठानानुपपत्तेश्च॥39॥

सच ईश्वरो जगत्कर्तृत्वेन कल्प्यमानो लौकिकन्यायेन कल्पनीयः. सच अधिष्ठित एवं किञ्चित् करोतीति ईश्वरेऽपि अधिष्ठानम् अङ्गीकर्तव्यम्. तस्मिन् कल्प्यमाने मतविरोधः, अनवस्था, असम्भवश्च॥39॥

करणवच्चेद् न भोगादिभ्यः॥40॥

करणवद् अङ्गीकारे असम्बन्धदोषः परिहृतो भवति. तच्च न युक्तं, भोगादिप्रसक्तेः॥40॥
अन्तवत्त्वम् असर्वज्ञता वा॥41॥
ईश्वरः प्रकृतिजीवनियमार्थम् अङ्गीकृतः. तत्तु तयोः परिच्छेदे सम्भवति. ततश्च लोकन्यायेन जीव-प्रकृत्योः अन्तवत्त्वं भवेत्. ततश्च अनित्यतायां मोक्षशास्त्रवैफल्यम्. एतद्दोषपरिहाराय विभुत्वनित्यत्वे अङ्गीक्रियमाणे सम्बन्धाभावाद् असर्वज्ञता वा स्यात्. तस्माद् असङ्गतः तार्किकवादः॥41॥
इति द्वितीयाध्याये द्वितीयपादे सप्तमं पत्युरसामञ्जस्याद् इति अधिकरणम्॥7॥
उत्पत्यसम्भवात्॥42॥ (2।2।8)
भागवतमते कञ्चिद् अंशं निराकरोति. ते च चतुर्व्यूहोत्पत्तिं वदन्ति. वासुदेवात् सङ्कर्षणः, तस्मात् प्रद्युम्नः, तस्माद् अनिरुद्धः इति. तत्र एषाम् ईश्वरत्वं सर्वेषाम् उत सङ्कर्षणस्य जीवत्वम्, अन्यान्यत्वम्? उत्पत्तिपक्षे जीवस्य उत्पत्तिः न सम्भवति. तथा सति पूर्ववत् सर्वनाशः स्यात्॥42॥
न च कर्तुः करणम्॥43॥
कर्तुः 'सङ्कर्षण'सञ्ज्ञकाद् जीवात् 'प्रद्युम्न'सञ्ज्ञकं मनः उत्पद्यते इति. तद् लोके न सिद्धम्. नहि कुलालाद् दण्डः उत्पद्यते इति. 'च'काराद् अग्रिमस्य निराकरणम्॥43॥
विज्ञानादिभावे वा तदप्रतिषेधः॥44॥
अथ सर्वे परमेश्वराः विज्ञानादिमन्तः इति. तथा सति तदप्रतिषेधः. ईश्वराणाम् अप्रतिषेधः. अनेकेश्वरत्वं च न युक्तम् इति अर्थः. वस्तुतस्तु स्वातन्त्रयमेव दोषः॥44॥
विप्रतिषेधाच्च॥45॥
बहुकल्पनया वेदनिन्दया च विप्रतिषेधः. 'च'काराद् वेदप्रक्रिया-विरोधः ॥45॥
इति द्वितीयाध्यायस्य द्वितीयपादे अष्टमम् उत्पत्यसम्भवाद् इति अधिकरणम्॥8॥
इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
द्वितीयाध्यायस्य द्वितीयः पादः॥

## *द्वितीयो अध्यायः तृतीयः पादः*

### न वियदश्रुतेः॥1॥ (2।3।1)

श्रुतिवाक्येषु परस्परविरोधः परिह्रियते विप्रतिषेधपरिहाराय. मीमांसायाः तदर्थं प्रवृत्तत्वात् शक्त्यविरोधाभ्याम्. तथाच ब्रह्मवादे जडजीवयोः विरुद्धांशनिराकरणाय तृतीयपादारम्भः.
द्विविधा हि वेदान्ते सृष्टिः. भूत-भौतिकं सर्वं ब्रह्मणएव विस्फुलिङ्ग-न्यायेन एका, अपरा वियदादिक्रमेण, सा च अनामरूपात्मनो नामरूपवत्त्वेन अभिव्यक्तिः. सजडस्यैव कार्यत्वात् तस्य जीवस्यतु अंशत्वेनैव न नामरूपसम्बन्धः.

अनित्ये जननं नित्ये परिच्छिन्ने समागमः॥
नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा॥28॥
(भाग.सुबो.कारि.2।6।1)

तत्र क्रमसृष्टौ सन्देहः. छान्दोग्ये हि, "सदेव सोम्य इदम् अग्र आसीद् एकमेवाद्वितीयम्" (छान्दो.उप.6।2।1) इति उपक्रम्य "तदैक्षत तत् तेजो असृजत" (तत्रैव 6।2।3) इति तेजोऽबन्न-सृष्टिः उक्ता, न वाय्वाकाशयोः. तैत्तिरीयके पुनः "ब्रह्मविद् आप्नोति परम्" (तैत्ति.उप.2।1) इति उपक्रम्य, "तस्माद् वा एतस्माद् आत्मन आकाशः सम्भूतः" (तैत्ति.उप.2।1) इति आकाशादिसृष्टिः उक्ता. उभयमपि क्रमसृष्टिवाचकम् इति एकवाक्यता युक्ता. छान्दोग्ये मुख्यतया सृष्टिः, तैत्तिरीये गौणी. मुख्यातु अग्रे वक्ष्यते, "सो अकामयत" (तैत्ति.उप.2।6) इत्यादिना.

तत्र संशयः : किम् आकाशम् उत्पद्यते न वा? इति. किं तावत् प्राप्तम्? न उत्पद्यते इति. कुतः? अश्रुतेः. श्रुतिवादिनां श्रुत्यैव निर्णयः. श्रुतौ पुनः मुख्ये क्रमसृष्टौ न श्रूयते॥1॥

अस्ति तु॥2॥

'तु'शब्दः पक्षं व्यावर्तयति. तैत्तिरीयके वियदुत्पत्तिः अस्ति. यद्यपि मुख्ये नास्ति तथापि विरोधाभावाद् अन्यत्रोक्तमपि अङ्गीकर्तव्यम् एकवाक्यत्वाय, एकविज्ञानेन सर्वविज्ञानानुरोधाच्च॥2॥

गौण्यसम्भवात्॥3॥

वियदुत्पत्तिः गौणी भविष्यति. कुतः? असम्भवात्. न हि आकाशस्य उत्पत्तिः सम्भवति, निरवयवत्वाद् व्यापकत्वाच्च. मुख्ये च अभावात्. एकविज्ञाने सर्वविज्ञानप्रतिज्ञातु तदधिष्ठानत्वेन जीववत् तदंशत्वेन वा तच्छरीरत्वेन वा एकविज्ञानकोटिनिवेशात्. लोकेऽपि "अवकाशं कुरु" इत्यादौ गौणप्रयोगदर्शनात्॥3॥

शब्दाच्च॥4॥

"वायुश्चान्तरिक्षं च एतदमृतम्" (बृहदा.उप.2।3।3) इति. "आकाशवत् सर्वगतश्च नित्यः" इति. न हि अमृतस्य ब्रह्मदृष्टान्तभूतस्य उत्पत्तिः सम्भवति॥4॥

स्याच्च एकस्य 'ब्रह्म'शब्दवत्॥5॥

ननु कथं वियदुत्पत्तिः गौणी भविष्यति? तत्र हि 'सम्भूत'इति एकमेव पदम् उत्तरत्र आवर्त्यते. तथा सति उत्तरत्र मुख्या आकाशे गौणी इति युगपद्वृत्तिद्वयविरोधः इति चेद्, न. एकस्यापि स्यात् क्वचित् मुख्या क्वचिद् गौणी इति. 'ब्रह्म'शब्दो यथा, "तपसा ब्रह्म विजिज्ञासस्व. तपो ब्रह्म" (तैत्ति. उप.3।2) इति. प्रथमवाक्ये मुख्या, द्वितीये गौणी. न च अत्र प्रयोगभेदो अस्ति इति वाच्यम्. 'सम्भूत'शब्दोऽपि आवर्त्यते नतु तादृशार्थयुक्तोऽपि. आत्मसत्त्वेनैव तत्सत्त्वम् इति सत्त्वगुणो वचनहेतुः. तत्-तद्भावापन्नं ब्रह्मैव सर्वत्र कारणमिति न अनेकलक्षणा. तद्भावापत्तिविशेषणव्यावृत्त्यर्थमपि न लक्षणा. स्वभावतोऽपि ब्रह्मणः सर्वरूपत्वात्. तस्माद् गौणी आकाश-सम्भूति-श्रुतिः इत्येवं प्राप्ते इदम् आह॥5॥

प्रतिज्ञाहानिः अव्यतिरेकात् शब्देभ्यः॥6॥

भवेद् एतद् एवं यदि छान्दोग्यश्रुतिः न विरुद्ध्येत. कथम्? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा(छान्दो.उप.6।1।3) बाध्येत, अव्यतिरेकाद् अनुद्‍ग्मात्. यदि सम्बद्धमेव ब्रह्मणा आकाशं तिष्ठेत् तदा ब्रह्मविज्ञानेन आकाशविषयीकरणे तद् न एकविज्ञानम्. आकाशस्य च लौकिकत्वात् तज्ज्ञानं सर्वज्ञतायाम् अपेक्षितमेव. न च जीववद् लौकिकत्वाद् व्यवहारमात्रविषयत्वाद् न अतीन्द्रियत्वादिचिन्ता. अनुद्‍गमेऽपि वस्तुसामर्थ्यात् कथं प्रतिज्ञा हीयते? इत्यतः आह शब्देभ्यः. "येन अश्रुतं श्रुतं भवति अमतं मतं भवति अविज्ञातं विज्ञातं भवति" (छान्दो.उप. 6।1।1) इति शब्दात् प्रकृति-विकारभावेनैव व्युत्पादयति ज्ञानम्. शब्देभ्यो हेतुभ्यः प्रतिज्ञाहानिः इति योजना॥6॥

यावद् विकारन्तु विभागो लोकवत्॥7॥

'तु'शब्दः आकाशोत्पत्त्यसम्भावनशङ्कां वारयति. यद्यद् विकृतं तस्य सर्वस्य विभागः उत्पत्तिः. आकाशमपि विकृतं, लौकिकव्यवहारविषयत्वात्. यथा लोके विकृतमात्रम् उत्पद्यते. आकाशोत्पत्तौ श्रुत्या सिद्धायाम्

"आकाशवत् सर्वगतश्च नित्यः" (...............),

"आकाश-शरीरं ब्रह्म" (तैत्ति.उप.1।6।2)

"स यथा अनन्तो अयमाकाश एवम् अनन्त आत्मा वेदितव्य" ( )

"आकाश आत्मा" (तैत्ति.उप.1।7) इत्यादिश्रुतयः,

"समोऽनेन सर्वेण य आकाशे तिष्ठन्" (बृहदा.उप.3।7।12)

"सर्वम् आत्मा" (मैत्रा.उप.6।7) इत्येवमादिभिः एकवाक्यतां लभन्ते. व्यवहारेतु अज्ञबोधनं वाक्यानाम् उपयोगः॥7॥

इति द्वितीयाध्याये तृतीयपादे प्रथमं वियदिति अधिकरणम्॥1॥

## एतेन मातरिश्वा व्याख्यातः॥8॥ (2।3।2)

आकाशोत्पत्तिसमर्थनेन मातरिश्वोत्पत्तिः समर्थिता. "सैषा अनस्तमिता देवता" (बृहदा.उप.1।5।22) इति भौतिकवायुव्यावृत्त्यर्थम् 'अलौकिक'पदम् ॥8॥

इति द्वितीयाध्याये तृतीयपादे द्वितीयम् एतेन मातरिश्वा इति अधिकरणम्॥2॥

## असम्भवस्तु सतोऽनुपपत्तेः॥9॥ (2।3।3)

ननु ब्रह्मणोऽपि उत्पत्तिः स्यात् "आकाशवत् सर्वगतश्च नित्य" इतिश्रुतेः आकाशन्यायेन सर्वगतत्वनित्यत्वयोः अभावे इति इमाम् आशङ्कां 'तु'शब्दः परिहरति. सतः सन्मात्रस्य उत्पत्तिः न सम्भवति. न हि कुण्डलोत्पत्तौ कनकोत्पत्तिः उच्यते, नामरूपविशेषाभावात्. उत्पत्तिश्च स्वीक्रियमाणा न उपपद्यते. स्वतो न सम्भवति. अन्यतस्तु अनवस्था. यदेव च मूलं तदेव ब्रह्म इति ॥9॥

इति द्वितीयाध्याये तृतीयपादे तृतीयम् असम्भवाधिकरणम्॥3॥

## तेजो अतः तथा हि आह॥10॥ (2।3।4)

तेजो अतो वायुतः. तथा हि आह "वायोरग्निः" (तैत्ति.उप.2।1) इति श्रुतेः. 'हि'शब्देन एवम् आह. छान्दोग्यश्रुतिः प्रतिज्ञाहानि-निराकरणार्थं तैत्तिरीयकम् अपेक्षते वाय्वाकाशयोः उत्पत्त्यर्थम्. तथाच उपजीव्यस्य प्राधान्याद् वायुभावापन्नमेव सत् तेजस उत्पादकम् इति स्वीकरोति.
ब्रह्मणएव सर्वोत्पत्तिपक्षस्तु अविरुद्धः॥10॥
इति द्वितीयाध्याये तृतीयपादे चतुर्थं तेजोऽत इति अधिकरणम्॥4॥

## आपः॥11॥ (2।3।5)

"तथा हि आह" इत्येव. इदम् एकम् अनुवादसूत्रम् अविरोधख्यापकं "न श्रुत्योः सर्वत्र विरोधः" इति॥11॥
इति द्वितीयाध्याये तृतीयपादे पञ्चमम् आपः इति अधिकरणम्॥5॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः॥12॥ (2।3।6)

"ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि" (छान्दो.उप.6।2।4) इति "ता अन्नमसृजन्त" (तत्रैव 6।2।4) इति. तत्र 'अन्न'शब्देन व्रीह्यादयः आहोस्वित् पृथिवी? इति सन्देहः. ननु कथं सन्देहः? पूर्वन्यायेन उपजीव्यश्रुतेः बलीयस्त्वाद् इति चेद्, उच्यते. "अद्भ्यः पृथिवी, पृथिव्याः ओषधयः ओषधीभ्यो अन्नम्" (तैत्ति.उप.2।1) इति अग्रे वर्तते. तथा सति पृथिवीम् ओषधीश्च सृष्ट्वा आपो अन्नं सृजन्ति आहोस्विद् 'अन्न'शब्देनैव पृथिवी? इति. ननु एवम् अस्तु पृथिव्योषधिसृष्ट्यनन्तरम् अन्नसृष्टिः इति चेद्, न, छान्दोग्यश्रुतेः अपेक्षाभावात्, महाभूतमात्रस्यैव अभिलषितत्वाद्, एकपदलक्षणापेक्षया तत्स्वीकारस्य गुरुत्वात् पूर्वोक्तएव संशयः.
तत्र "अन्नमयं हि सोम्य मन, आपोमयः प्राणः, तेजोमयी वाक्" (छान्दो.उप.6।5।4) इति त्रयाणां सहचारः सर्वत्र उपलभ्यते. लोकप्रसिद्धिः वर्षणभूयिष्ठलिङ्गं च. तस्मात् पृथिव्योषध्यन्नानां मध्ये अभेदविवक्षया यत्किञ्चिद् वक्तव्ये 'अन्नम्' उक्तम् इत्येवं प्राप्ते उच्यते. 'अन्न'शब्देन पृथिवी कुतः? अधिकाररूपशब्दान्तरेभ्यः. अधिकारो भूतानामेव, न भौतिकानाम्. नीलञ्च रूपं पृथिव्याएव, भूतसहपाठात्. शब्दान्तरम् "अद्भ्यः पृथिवी" (तैत्ति.उप.2।1) इति. तस्माद् 'अन्न'शब्देन पृथिव्येव॥12॥
इति द्वितीयाध्याये तृतीयपादे पृथिव्यधिकारः इति षष्ठम् अधिकरणम्॥6॥

## तदभिध्यानादेव तु तल्लिङ्गात् सः॥13॥ (2।3।7)

आकाशादेव कार्याद् वाय्वादिकार्योत्पत्तिं ‘तु’शब्दो वारयति. सएव परमात्मा वाय्वादीन् सृजति. कथम्? तच्छब्दवाच्यतेति चेत् तदभिध्यानात्. तस्य-तस्य कार्यस्य उत्पादनार्थं तदभिध्यानं, ततः तदात्मकत्वं, तेन तद्वाच्यत्वम् इति. ननु यथाश्रुतमेव कुतो न गृह्यते? इत्यतः आह तल्लिङ्गात्. सर्वकर्तृत्वं लिङ्गं तस्यैव सर्वत्र वेदान्तेषु अवगतम्. जडतो देवतायाः वा यत्किञ्चिज् जायमानं तत् सर्वं ब्रह्मणएव इति सिद्धम्॥13॥

इति द्वितीयाध्याये तृतीयपादे तदभिध्यानादेव इति सप्तमम् अधिकरणम्॥7॥

## विपर्ययेण तु क्रमो अत उपपद्यते॥14॥ (2।3।8)

यथा उत्पत्तिः न तथा प्रलयः, किन्तु विपर्ययेण क्रमः. अतः उत्पत्त्यनन्तरं प्रलयः. कुतः? उपपद्यते. प्रवेशविपर्ययेण हि निर्गमनम्. क्रमसृष्टावेव एतत्॥14॥

इति द्वितीयाध्याये तृतीयपादे विपर्ययेण इति अष्टमम् अधिकरणम्॥8॥

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गाद्

## इति चेद् न अविशेषात्॥15॥ (2।3।9)

तैत्तिरीयके आकाशादि अन्नपर्यन्तम् उत्पत्तिम् उक्त्वा अन्नमयादयो निरूपिताः. तत्र अन्नमयस्य प्राणमयस्य च सामग्री पूर्वम् उत्पन्ने उक्ता. आनन्द-मयस्तु परमात्मा. मध्ये विज्ञानमनसी विद्यमाने क्वचिद् उत्पन्ने इति वक्तव्ये.

तत्र क्रमेण उत्पन्ने इति वक्तव्यम्. क्रमस्तु प्रातिलोम्येन, सूत्रे विपर्ययानन्तरकथनात्, ‘अन्तरा’इतिवचनाच्च. तेजोऽबन्नानाम् अन्नमये गतत्वात्. वाय्वाकाशयोः प्राणएव गतत्वात्. आकाशात् पूर्वं विज्ञानमनसी उत्पन्ने इति वक्तव्यम्. तयोः अग्रे वचनमेव लिङ्गम् इति, अतः तयोः उत्पत्तिः वक्तव्या इति चेद्, न, अविशेषात्. नामरूपविशेषवतामेव उत्पत्तिः उच्यते, नतु अनयोः, विज्ञानमयस्य जीवत्वात्. मनोमयस्य च वेदत्वात्. अतो भूतभौतिक-प्रवेशाभावाद् न तयोः उत्पत्तिः वक्तव्या॥15॥

चराचरव्यपाश्रयस्तु स्यात्

तद्व्यपदेशो भाक्तः तद्भावभावित्वात्॥16॥

ननु विज्ञानमयस्य जीवस्य अनुत्पत्तौ सर्वव्यवहारोच्छेदः. उत्पत्तिस्तु त्रिविधा निरूपिता. “अनित्ये जननं नित्ये परिच्छिन्ने समागमः” (भाग.सुबो. कारि.28) इति. तथाच जीवस्य समागमलक्षणापि उत्पत्तिः न स्यादिति इमाम् आशङ्कां निराकरोति ‘तु’शब्दः. चराचरे स्थावर-जङ्गमे शरीरे तयोः विशेषेण अपाश्रयः आश्रयः शरीरसम्बन्धः इति यावत्. स तु स्यात्. नतु स्वतः. ननु शरीरस्य उत्पत्तौ जीवोऽपि उत्पद्यते. अन्यथा जातकर्मादीनाम् अभावप्रसङ्गाद् इति चेद्, न. तद्व्यपदेशः तस्य शरीरस्य जन्म-मरणधर्मवत्त्वेन जीवव्यपदेशो भाक्तो लाक्षणिकः. कुतः? तद्भावभावित्वात्. शरीरस्य अन्वयव्यतिरेका-भ्यामेव जीवस्य तद्भावित्वम्. देहधर्मो जीवस्य भाक्तः. तत्सम्बन्धेनैव उत्पत्तिव्यपदेशः इति सिद्धम्॥16॥

इति द्वितीयाध्याये तृतीयपादे नवमम् अन्तरा विज्ञानमनसी इत्यधिकरणम्॥9॥

## न आत्मा अश्रुतेः नित्यत्वाच्च ताभ्यः॥17॥ (2।3।10)

ननु जीवोऽपि उत्पद्यतां, किमिति भाक्तत्वं कल्प्यते? इति चेद्, न. आत्मा न उत्पद्यते. कुतः? अश्रुतेः. न हि आत्मनः उत्पत्तिः श्रूयते. "देवदत्तो जातो", "विष्णुमित्रो जातः" इति देहोत्पत्तिरेव, नतु तद्व्यतिरेकेण पृथक् जीवोत्पत्तिः श्रूयते. विस्फुलिङ्गवद् उच्चरणं न उत्पत्तिः, नामरूप-सम्बन्धाभावात्. एतस्य गुणाः स्वरूपं च अग्रे वक्ष्यते. किञ्च, नित्यत्वाच्च ताभ्यः श्रुतिभ्यः. "अयम् आत्मा अजरो अमरः" (बृहदा.उप.4।4।25), "न जायते म्रियते" (कठोप.1।2।18) इत्येवमादिभ्यः॥17॥

इति द्वितीयाध्याये तृतीयपादे दशमम् नात्माश्रुतेः इति अधिकरणम्॥10॥

गुणान् निरूपयन् प्रथमतः चैतन्यगुणम् आह

## ज्ञो अतएव॥18॥ (2।3।11)

ज्ञः चैतन्यस्वरूपः. अतएव श्रुतिभ्यो "विज्ञानमयः"(तैत्ति.उप.2।4) इत्यादिभ्यः. सर्वविप्लववादी ब्रह्मवाक्यानि उदाहृत्य सूत्रोक्तसिद्धान्तम् अन्यथाकृत्य श्रुतिसूत्रोल्लङ्घनेन प्रगल्भते. सः वक्तव्यः. किं जीवस्य ब्रह्मत्वं प्रतिपाद्यते जीवत्वं वा निराक्रियते? इति. आद्ये इष्टापत्तिः. न हि विस्फुलिङ्गो अग्न्यंशो भूत्वा न अग्निः. द्वितीये स्वरूपनाशः. जीवत्वं कल्पितम् इति चेद्, न, "अनेन जीवेन आत्मना" (छान्दो.उप.6।3।2) इति श्रुतिविरोधात्. नच अनादिः अयं जीवब्रह्मविभागो बुद्धिकृतः, प्रमाणाभावात्. "सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्" (छान्दो.उप.6।2।1) इति श्रुतिविरोधश्च. नच जीवातिरिक्तं ब्रह्म नास्ति सर्वश्रुति-सूत्रनाशप्रसङ्गात्,

"यः सर्वज्ञः" (मुण्ड.उप.1।1।9),

"सर्वशक्तिः" (श्वेता.उप.4।1),

"अयमात्मापहतपाप्मा" (छान्दो.उप.8।1।5),

"अधिकन्तु भेदनिर्देशाद्" (ब्रह्मसू.2।1।22) इत्यादिबाधः. तस्मात् तदंशस्य तद्व्यपदेशवाक्यमात्रं स्वीकृत्य शिष्टपरिग्रहार्थं माध्यमिकस्यैव अयम् अपरावतारो नितरां सद्भिः उपेक्ष्यः ॥18॥

इति द्वितीयाध्याये तृतीयपादे एकादशं ज्ञोऽतएव इति अधिकरणम्॥11॥

## उत्क्रान्तिगत्यागतीनाम्॥19॥ (2।3।12)

"अतएव" इति च वर्तते.

"स यदा अस्मात् शच्छरीराद् उत्क्रामति सहैवैतैः सर्वैः उत्क्रामति, (कौषि.उप.3।3); ये के चास्माद् लोकात् प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" (तत्रैव 1।2) इति. "तस्माद् लोकात् पुनरेति अस्मै लोकाय कर्मणे" (बृहदा. उप.4।4।6). श्रुत्युक्तानाम् उत्क्रान्तिगत्यागतीनां

श्रवणाद् यथायोग्यं तस्य परिमाणम् अङ्गीकर्तव्यम्. यद्यपि "आराग्रमात्रो ह्यपरोऽपि दृष्टः" (श्वेता. उप.5।8) इति श्रुत्यैव परिमाणम् उक्तं, तथापि बहुवादिविप्रतिपन्नत्वाद् युक्तिभिः साधयति. ब्रह्मवैलक्षण्यार्थम् उत्क्रान्तिपूर्वकत्वम् उक्तम्॥19॥
स्वात्मना चोत्तरयोः॥20॥
उत्क्रान्तिगत्यागतीनां सम्बन्धे इन्द्रियादिभिः परिष्वङ्गोऽपि अस्ति. ततः सन्देहोऽपि भवेत्. किम् उपाधितः एतेषां सम्बन्धो भवेत् स्वतो वा? इति. उत्तरयोः गत्यागत्योः, स्वात्मना केवलस्वरूपेण, "ऊर्णनाभिः यथा तन्तून् सृजते सञ्चरत्यपि, जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः" ब्रह्मोपनिषत्. "अनेन जीवेन आत्मना अनुप्रविश्य" (छान्दो.उप.6।3।2), "ब्रह्माप्येति" (बृहदा.उप.4।4।6), "कामरूप्यनुसञ्चरन्" (तैत्ति.उप.3।10) इति वा.
अथवा उत्क्रन्तिगत्यागतीनां जीवसम्बन्धएव बोध्यते, न अणुत्वम्. स्वात्मना च उत्तरयोः इति अणुत्वम्. "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" (महाभा.3।29।17) इति, उत्क्रमे गत्यतिरिक्ते स्वातन्त्र्याभावात्. स्वात्मना जीवरूपेण 'च'काराद् इन्द्रियैश्च गत्यागत्योः सम्बन्धी जीवः इति अर्थः. अतो मध्यमपरिमाणम् अयुक्तमिति अणुरेव भवति॥20॥
न अणुः अतच्छ्रुतेः इति चेद् न इतराधिकारात्॥21॥
जीवो न अणुः भवितुम् अर्हति. कुतः? अतच्छ्रुतेः अणुत्वविपरीत-व्यापकत्वश्रुतेः. "स वा एष महानज आत्मा यो अयं विज्ञानमयः" (बृहदा.उप. 4।4।22) इति चेद्, न, इतराधिकारात्. इतरः परं ब्रह्म तस्य अधिकारे "महानज" (बृहदा.उप.4।4।22) इति वाक्यं प्रकरणेन शब्दाश्च नियम्यन्ते. अन्यपरापि योगेन ब्रह्मपरा भविष्यन्ति॥21॥
'स्व'शब्दोन्मानाभ्यां च॥22॥
"स्वयं विहृत्य स्वयं निर्माय स्वेन भाषा स्वेन ज्योतिषा प्रस्वपिति" (बृहदा.उप.4।3।9) इति 'स्व'शब्दो अणुपरिमाणं जीवं बोधयति. न हि स्वप्ने व्यापकस्य वा शरीरपरिमाणस्य वा विहरणं सम्भवति. "बालाग्रशतभागस्य शतधा कल्पितस्य तु, भागो जीवः सः विज्ञेयः" (श्वेता.उप.5।9) इति, "आराग्रमात्रो ह्यपरोऽपि दृष्टः" (तत्रैव 5।9) इति च उन्मानम्. 'च'कारात् स्वप्नप्रबोधयोः सन्धौ आगतिदर्शनम् ॥22॥
अविरोधश्चन्दनवत्॥23॥
अणुत्वे सर्वशरीरव्यापि चैतन्यं न घटतइति विरोधो न भवति, चन्दनवत्. यथा चन्दनम् एकदेशस्थितं सर्वदेहसुखं करोति, महातप्ततैलस्थितं वा तापनिवृत्तिम्॥23॥
अवस्थितिवैशेष्याद् इति चेद् नाभ्युपगमाद् हृदि हि॥24॥
चन्दने अवस्थितिवैशेष्यं अनुपहतत्वचि सम्यक्तया अवस्थानं तस्मात्. त्वच एकत्वात् तत्र भवतु नाम, नतु प्रकृते तथा सम्भवति इति चेद्, न, अभ्युपगमात्. अभ्युपगम्यते जीवस्यापि स्थानविशेषः. हृदि हि. हृदि जीवस्य स्थितिः. "गुहां प्रविष्टौ" (कठोप.1।3।1) इति हि युक्तिः ॥24॥
गुणाद् वा आलोकवत्॥25॥

जीवस्य हि चैतन्यं गुणः. सः सर्वशरीरव्यापी. यथा मणिप्रवेकस्य कान्तिः बहुदेशं व्याप्नोति तद्वत्. प्रभायाः गुणत्वमेव स्पर्शानुपलम्भाद् उदकगतौष्ण्यवत्. नच विजातीयस्य आरम्भकत्वं, प्रमाणाभावात्. लोकप्रतीतिस्तु सर्वैः वादिभिः उपपाद्या. तत्र गुणिकल्पनापेक्षया गुणएव स्थलान्तरः आरभ्यते इति कल्प्यताम्, तथैव लोकप्रतीतेः. पुष्परागादेरपि प्रभारूपमेव तावद्देशं व्याप्नोतीति मणिस्वभावादेव अङ्गीकर्तव्यम्, आरम्भकस्य तेजसः तत्र अभावात्. कान्तिः प्रभा रूपम् इति हि लोके पर्यायः. 'वा'शब्दो यथालोकं युक्तिः कल्पनीया इति सूचयति. ब्रह्मसिद्धान्तेतु यथैव लोके दृश्यते तथैव ब्रह्मणो जातमिति न कल्पनालेशोऽपि॥25॥

व्यतिरेको गन्धवत्॥26॥

सिद्धं दृष्टान्तम् आह. यथा चम्पकादिगन्धः चम्पकव्यवहितस्थलेऽपि उपलभ्यते. वेदोक्तत्वाद् अस्य दृष्टान्तत्वं "यथा वृक्षस्य सम्पुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति" (महाना.उप.8।2) इति. अन्यथा-कल्पनातु अयुक्ता इति अवोचाम॥26॥

तथा च दर्शयति॥27॥

हृदयायतनत्वम् अणुपरिमाणत्वञ्च आत्मनो अभिधाय तस्यैव "आलोमभ्यः आनखाग्रेभ्यः" (कौषि.उप.4।19) इति चैतन्येन गुणेन समस्त-शरीरव्यापित्वं दर्शयति॥27॥

पृथगुपदेशात्॥28॥

"प्रज्ञया शरीरं समारुह्य" (कौषि.उप.3।6) इति करणत्वेन पृथग् उपदेशात् चैतन्यं गुणः॥28॥

इति द्वितीयाध्याये तृतीयपादे उत्क्रान्तिगत्यागतीनाम्
इति द्वादशम् अधिकरणम्॥12॥

## तद्ॗगुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्॥29॥ (2।3।13)

ननु "तत्त्वमस्या"(छान्दो.उप.6।9।4)दिवाक्यैः परमेव ब्रह्म जीव इति कथम् अणुत्वम्? इति इमाम् आशङ्कां निराकरोति 'तु'शब्दः. तस्य ब्रह्मणो गुणाः प्रज्ञाद्रष्टृत्वादयः तएव अत्र जीवे सारा इति जडवैलक्षण्यकारिणः इति अमात्ये 'राज'पदप्रयोगवद् जीवे भगवद्व्यपदेशः. "मैत्रेयी"(बृहदा. उप.2।4)ति सम्पूर्णे ब्राह्मणे भगवत्त्वेन जीवः उक्तः.

ननु कथम् अन्यस्य अन्यधर्मवत्त्वेन् कथनम्? न हि निरूपणस्थलएव उपचारः सम्भवति. तत्र आह प्राज्ञवत्. "तद् यथा प्रियया स्त्रिया सम्परि-ष्वक्तः"(बृहदा.उप.4।3।21) इत्यत्र "एवमेव अयं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तः"(तत्रैव) इति अभिधाय प्राज्ञस्वरूपम् आह "तद्वा अस्यैतदति-च्छन्दो अपहतपाप्मा अभयं रूपमशोकान्तरमत्र पिता अपिता भवति"(बृहदा. उप.4।3।21) इत्यादि. प्राज्ञश्च सुषुप्तिसाक्षी. नहि तस्य अपहतपाप्मत्वम् अस्ति, ब्रह्मलिङ्गात्. एवमेव शारीरस्यापि जीवस्य ब्रह्मधर्मबोधिकाः श्रुतयः.

इदम् अत्र वक्तव्यम्. सर्वोपनिषत्सु ब्रह्मज्ञानं परमपुरुषार्थसाधनमिति तन्निर्णयार्थं भगवान् व्यासः सूत्राणि चकार. तत्र ब्रह्मसूत्रे विचारं प्रतिज्ञाय जगत्कर्तृत्वाद्यसाधारणलक्षणं ब्रह्मणः प्रतिज्ञाय समन्वयनिरूपणे जीववाक्यानि दूरीकृत्य अविरोधेऽपि, ऐक्येऽपि अहिताकरणादिदोषम् आशङ्क्य, "अधिकन्तु भेदनिर्देशाद्" (ब्रह्मसू.2।1।22) इति परिहृत्य जीवस्य अणुत्वम् उपचाराद् ब्रह्मत्वम् अंशत्वं पराधीनकर्तृत्वादिकं प्रतिपाद्य तस्यैव दक्षिणमार्गेण पुनरावृत्तिम् उक्त्वा ससाधनेन ब्रह्मज्ञानेन अर्चिरादिद्वारा ब्रह्मप्राप्तिम् उक्त्वा "न स पुनरावर्तते"(छान्दो.उप.8।3।1) इति अनावृतिं वदन् शास्त्रपर्यवसानेन सर्वान् वेदान्तान् अव्याकुलतया योजितवान्.

तत्र कश्चित् तद्व्यपदेशेन प्रोक्तानि 'तत्त्वमस्या'दिवाक्यानि स्वीकृत्य जीवमात्रं च ब्रह्म स्वीकृत्य तदतिरिक्तस्य सर्वस्य कारणांशकार्यरूपस्य मिथ्यात्वं परिकल्प्य तद्बोधकश्रुतीनाम् अर्थवादत्वेन मिथ्यात्वं स्वीकृत्य सुषुप्तिसम्पत्योः भगवता प्रकटीकृतम् आनन्दरूपत्वं तत्प्रतिपादकवाक्यानां सद्योमुक्तिरूप-फलवाचकत्वम् उक्त्वा क्रममुक्तिम् उपासनापरत्वेन योजयित्वा वेदसूत्राणि व्याकुलीचकार. तद् वेदान्तानां ब्रह्मपरत्वं जीवपरत्वं वा इति यद् अत्र युक्तं तत् सद्भिः अनुसन्धेयम्॥29॥

यावदात्मभावित्वाच्च न दोषः तद्दर्शनात्॥30॥

ननु कथम् अन्यस्य नीचस्य सर्वोत्कृष्टव्यपदेशोऽपि? न हि प्रामाणिकैः सर्वथा अयुक्तेः व्यपेदशः क्रियते. नच उक्ततद्‌गुणसारत्वाद् ब्रह्मणः आनन्दांशस्य प्राकट्याद् इति वाच्यम्. तथा सति प्राज्ञवत् पुनः तिरोहितं स्यादिति तस्य तद्व्यपदेशो व्यर्थो अयुक्तश्च इति चेद्, न अयं दोषः. कुतः? यावदात्म-भावित्वात्. पश्चाद् यावत्पर्यन्तम् आत्मा, नित्यत्वात्, सर्वदा आनन्दांशस्य प्राकट्यात् तस्य तथैव दर्शनम् अस्ति. अनावृतैश्वर्यादीनाम् उक्तत्वात्. प्राज्ञात् सम्पन्नत्वं विशेषः. 'च'कारात् तस्य च आनन्दः प्रकटितइति न दूषणगन्धोऽपि. व्यपदेशो वा न अत्यन्तम् अयुक्तस्य. यावद् आत्मा ब्रह्म भवति आनन्दांश-प्राकट्येन तावदेव तद्व्यपदेशः, राजज्येष्ठपुत्रवत्. एतदेव उक्तम्,

व्यापकत्वश्रुतिस्तस्य भगवत्वेन युज्यते॥29॥
आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः॥
प्रतीयेरन् परिच्छेदो व्यापकत्वं च तस्य तत् ॥30॥
(तत्त्वदी.निब.शास्त्रार्थप्र.53,54) इति॥30॥

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्॥31॥

व्यपदेशदशायामपि आनन्दांशस्य न अत्यन्तम् असत्त्वं पुंस्त्वादिवत्. यथा पुंस्त्वं सेकादिसामर्थ्यं बाल्ये विद्यमानमेव यौवने प्रकाशते तथा आनन्दांशस्यापि सतएव व्यक्तियोगः॥31॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गो अन्यतरनियमो वा अन्यथा॥32॥

ननु कथम् एवं स्वीक्रियते? इदानीं संसारावस्थायां सच्चित्प्राकट्यमेव. मोक्षेतु आन्नदांशोऽपि प्रकटइति तन्निवारयति. तथा सति नित्यम् उपलब्धिः स्यात् आन्दांशस्य. तथा सति न संसारावस्था उपपद्येत. अथ अनुपलब्धिः सर्वदा तथा सति मोक्षदशा विरुद्ध्येत. अथ अन्यतरनियमः. जीवो निरानन्दएव, ब्रह्मतु आनन्दरूपम्. तथा सति "ब्रह्मैव सन् ब्रह्माप्येति"(बृहदा.उप. 4।4।6 ) इति श्रुतिविरोधः. तस्मात् पूर्वोक्तएव प्रकारः स्वीकर्तव्यः इति सिद्धम्॥32॥

इति द्वितीयाध्याये तृतीयपादे तद्‌गुणसारत्वाद् इति त्रयोदशम् अधिकरणम्॥13॥

## कर्ता शास्त्रार्थवत्वात्॥33॥ (2।3।14)

सांख्यानां प्रकृतिगतमेव कर्तृत्वमिति त2-3न्निवारणार्थम् अधिकरणारम्भः. कर्ता जीवएव. कुतः? शास्त्रार्थवत्वात्. जीवमेव अधीकृत्य वेदे अभ्युदय-निःश्रेयसफलार्थं सर्वाणि कर्माणि विहितानि, ब्रह्मणो अनुपयोगात्. जडस्य अशक्यत्वात्. सन्दिग्धेऽपि तथैव अङ्गीकर्तव्यम्॥33॥

विहारोपदेशात् ॥34॥

तस्यैव गान्धर्वादिलोकेषु, "यद्यत् कामयते तत्तद् भवति"(छान्दो.उप. 8।1) इति विहार उपदिष्टः. ततश्च कर्तृत्वभोक्तृत्वयोः "साधुकारी साधुः भवति"(बृहदा.उप.4।4।5) इति सामानाधिकरण्यश्रवणाद् जीवएव कर्ता॥34॥

उपादानात्॥35॥

"तदेषां प्राणानां विज्ञानेन विज्ञानम् आदाय" (बृहदा.उप.2।1।17) इति जीवेन सर्वेषां विज्ञानम् उपादीयते. तस्माद् इन्द्रियादीनां करणत्वमेव. स्वातन्त्र्याद् अस्यैव कर्तृत्वम्.

यस्तु मन्यते बुद्धिसम्बन्धाद् जीवस्य कर्तृत्वम् इति सः प्रष्टव्यः. किं बुद्धिकर्तृत्वं जीवे समायाति अथवा जीवगतमेव कर्तृत्वं *बुद्धिसम्बन्धाद् उद्‌गच्छति, अथवा शशविषाणायितमेव कर्तृत्वं सम्बन्धे समायाति? न आद्यः, जडत्वाद् अनङ्गीकारात् पूर्वं निराकृतत्वाच्च. द्वितीयेतु इष्टापत्तिः, उपादानविरोधश्च. तृतीये शास्त्रविरोधः. ब्रह्मणि सिद्धत्वाच्च. असत्कार्यस्य निराकृतत्वात्. सर्वविप्लवस्तु माध्यमिकवद् उपेक्ष्यः॥35॥

व्यपदेशाच्च क्रियायां न चेद् निर्देशविपर्ययः॥36॥

व्यपदेशः, "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" (तैत्ति.उप. 2।5) इति. अत्र साङ्ख्ये बुद्ध्यादीनामेव कर्तृत्वं न जीवस्य इति क्रियायां यागादिकर्मसु, नतु भोगे. जीवस्य कर्तृत्वं न चेद्, न, तथा सति निर्देशस्य विपर्ययो भवेत्. "विज्ञानेन विज्ञानम् आदाय" (बृहदा.उप.2।1।17) इति श्रुत्यनुरोधात्. प्रकृतेऽपि तृतीयान्तता आपद्येत. अथ स्वव्यापारे कर्तृत्वं, तथापि पूर्वनिर्देशस्य विज्ञानमयस्य विपर्ययः स्यात् विकारित्वं स्यात्, तच्च असङ्गतम्, त्र्यच्त्वात्. "विज्ञानम् आदाय"(बृहदा.उप.2।1।17) इत्यत्र विपर्ययएव एकस्य प्रदेशभेदेन अर्थभेदोऽपि. भगवति सर्वे शब्दाः स्वभावतएव प्रवर्तन्ते, औपचारिकत्वज्ञापकाभावात्. "यज्ञो

यजमानः”(तैत्ति.सं.1।7।5।2) इति श्रद्धादीनां शिरस्त्वादि. तस्माद् विज्ञानमयो जीवएव. जडस्य च स्वातन्त्र्याभावाद् न कर्तृत्वम्॥36॥

उपलब्धिवदनियमः॥37॥

ननु जीवस्य कर्तृत्वे हिताकरणादिदोषप्रसक्तिः इति चेद्, न, उपलब्धिवदनियमः. यथा चक्षुषा इष्टम् अनिष्टं च उपलभते, एवम् इन्द्रियैः कर्म कुर्वन् इष्टम् अनिष्टं वा प्राप्नोति॥37॥

शक्तिविपर्ययात्॥38॥

ननु ईश्वरवत् स्वार्थम् अन्यथा न कुर्याद् इति चेद्, शक्तिविपर्ययात्. तथासामर्थ्याभावात्. इतएव दैवाद् अहितमपि करोति॥38॥

समाध्यभावाच्च॥39॥

जीवस्य क्रिया-ज्ञानशक्ती योगेन सिध्यतः. समाध्यभावात् शक्त्यभावः इति अर्थः. ‘च’कारात् तादृशमन्त्राभावोऽपि. नच सहजकर्तृत्वे अनिर्मोक्षः. पराधीनकर्तृत्वएव एतत्. ब्रह्मवत्. सांख्यस्य तन्मतानुसारिणो वा अन्यस्य भ्रमएव. कर्तृत्वे न मुक्तिः इति. नपुंसकः एवम् उच्येत इति बाह्यवत्. निरिन्द्रियस्यैव समाधिः इत्यपि. करणत्वेन बुद्धिं वदन् न केनापि दूष्यते.

तस्माद् जीवस्य स्वाभाविकं कर्तृत्वम्. “ध्यायतीव लेलायतीव” (बृहदा. उप.4।3।7) इत्यपि परधर्मानुकरणम्. अयमपि एको धर्मः. स्वाप्ययसम्पत्योः ब्रह्मव्यपदेशं पुरस्कृत्य सर्वविप्लवं वदन् उपेक्ष्यः॥39॥

यथा च तक्षोभयथा॥40॥

ननु कर्मकराणां कर्तृत्व-भोक्तृत्वभेदो दृश्यते तथा कर्तृत्व-भोक्तृत्वयोः भेदो भविष्यति इति चेद्, न. यथा तक्षा रथं निर्माय तत्र आरूढो विहरति, पीठं वा. स्वतो वा न व्याप्रियते वास्यादिद्वारेण वा. ‘च’काराद् अन्येऽपि स्वार्थकर्तारः. अन्यार्थमपि करोति इति चेत् तथा प्रकृतेऽपि सर्वहितार्थं प्रयतमानत्वात्. नच कर्तृत्वमात्रं दुःखरूपम्, पयःपानादेः सुखरूपत्वात्. तथाच स्वार्थ-परार्थकर्तृत्वं कारयितृत्वञ्च सिद्धम्॥40॥

इति द्वितीयाध्याये तृतीयपादे कर्ताशास्त्रार्थवत्वाद् इति चतुर्दशम् अधिकरणम्॥14।

## परात्तु तच्छ्रुतेः॥41॥ (2।3।15)

कर्तृत्वं ब्रह्मगतमेव. तत्सम्बन्धादेव जीवे कर्तृत्वं तदंशत्वाद् ऐश्वर्यादिवत्. नतु जडगतम् इत्यतो “नान्यो अतो अस्ति” (बृहदा.उप.4।3। 22) इति सर्वकर्तृत्वं घटते. कुतः एतत्? तच्छ्रुतेः. तस्यैव कर्तृत्वकारयितृत्व-श्रवणात्. “यमधो निनीषति तमसाधु कारयति” (कौषी.उप.3।9) इति. “सर्वकर्ता”(बृहदा.उप.4।4।13) “सर्वभोक्ता”(महाना.उप.16।5) “सर्वनियन्ता”(तैत्ति.आर.3।11) इति. सर्वरूपत्वाद् न भगवति दोषः॥41॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः॥42॥

ननु वैषम्य-नैर्घृण्ययोः न परिहारः, अनादित्वेन स्वस्यैव कारयितृत्वाद् इति पक्षं 'तु'शब्दो निवारयति. प्रयत्नपर्यन्तं जीवकृत्यम्, अग्रे तस्य अशक्यत्वात् स्वयमेव कारयति. यथा पुत्रं यतमानं बालं पदार्थगुणदोषौ वर्णयन्नपि तत्प्रयत्नाभिनिवेशं दृष्ट्वा तथैव कारयति. सर्वत्र तत्कारणत्वाय तदानीं फलदातृत्वे या इच्छा तामेव अनुवदति "उन्निनीषति, अधो निनीषति" (कौषी.उप.3॥9) इति. अन्यथा विहित-प्रतिषिद्धयोः वैयर्थ्यापत्तेः, अप्रामाणिकत्वं च. फलदाने कर्मापेक्षः. कर्मकारणे प्रयत्नापेक्षः. प्रयत्ने कामापेक्षः. कामे प्रवाहापेक्षः इति मर्यादारक्षार्थं वेदं चकार. ततो न ब्रह्मणि दोषगन्धोऽपि. न च अनीश्वरत्वम्. मर्यादामार्गस्य तथैव निर्माणात्. यत्र अन्यथा सः पुष्टिमध्ये इति ॥42॥
इति द्वितीयाध्याये तृतीयपादे परात्तु तच्छ्रुतेः इति पञ्चदशम् अधिकरणम्॥15॥
अंशो नानाव्यपदेशाद् अन्यथा चापि

### दाशकितवादित्वमधीयत एके॥43॥ (2।3।16)

जीवस्य ब्रह्मसम्बन्धि रूपम् उच्यते. जीवो नाम ब्रह्मणो अंशः. कुतः? नानाव्यपदेशात्. "सर्वएव आत्मानो व्युचरन्ति"(बृहदा.उप.2।1।20) "कपूयचरणाः रमणीयचरणाः"(छान्दो.उप.5।10।7) इति च.
ननु ब्रह्मणो निरवयवत्वात् कथं जीवस्य अंशत्वम् इति वाच्यम्. न हि ब्रह्म निरंशं सांशम् इति वा क्वचिद् लोके सिद्धम्, वेदैकसमधिगम्यत्वात्. साच श्रुतिः यथा उपपद्यते तथा तदनुल्लङ्घनेन वेदार्थज्ञानार्थं युक्तिः वक्तव्या. सा चेत् स्वयं न अवगता, तपो विधेयम्, अभिज्ञा वा प्रष्टव्या इति. नतु सर्वविप्लवः कर्तव्यः. तत्र एषा युक्तिः.
विस्फुलिङ्गा इवाग्नेर्हि जडजीवा विनिर्गताः॥
सर्वतः पाणिपादान्तात् सर्वतोक्षिशिरोमुखात्॥31॥
निरिन्द्रियात् स्वरूपेण तादृशादिति निश्चयः।
सदंशेन जडाः पूर्वं चिदंशेनेतरे अपि॥
अन्यधर्मतिरोभावान् मूलेच्छातोऽस्वतन्त्रिणः॥32॥
इति. ब्रह्मवादे अंशपक्षएव. ननु अंशत्वे सजातीयत्वम् आयाति. श्रुत्यन्तरे पुनः "ब्रह्मदाशा ब्रह्मेमे कितवा उत". अत्र सर्वस्यापि ब्रह्मविज्ञानेन विज्ञानप्रतिज्ञानाद् दाशादीनामपि ब्रह्मत्वं प्रतीयते. तत् कार्यत्वएव स्याद् इति चेद्, न. अन्यथा चापि प्रकारान्तरेणापि एके शाखिनो दाशकितवादित्वम् अधीयते शरीरत्वेन, अंशत्वेन च स्वरूपतः कार्याभावेऽपि प्रकारभेदेन कार्यत्वात्. तथाच न साजात्यम्, आनन्दांशस्य तिरोहितत्वात्. धर्मान्तरेणतु साजात्यम् इष्टमेव॥43॥
मन्त्रवर्णात्॥44॥
"पुरुष एवेदं सर्वम्" (ऋग्वेद 10।90।2) इति उक्त्वा, "पादोऽस्य विश्वा भूतानि" (तत्रैव 10।90।3) इति भूतानां जीवानां पादत्वं, पादेषु स्थितत्वेन वा अंशत्वम् इति॥44॥

अपि स्मर्यते॥45॥
वेदे स्वतन्त्रतया उपपाद्य वेदान्तरेऽपि तस्य अर्थस्य अनुस्मरणं, “ममैवांशो जीवलोके जीवभूतः सनातनः” (भग.गीता 15।7) इति॥45॥
प्रकाशादिवन्नैवं परः॥46॥
जीवस्य अंशत्वे हस्तादिवत् तद्दुःखेन परस्यापि दुःखित्वं स्याद् इति चेद्, न, एवं परो न भवति. एवम् इति प्रकारभेदः. द्विष्टत्वेन अनुभवः इति यावत्. अन्यथा, सर्वरूपत्वात्.
कुतः एवम्? तत्र आह प्रकाशादिवत्. “नाग्नेर्हि तापो न हिमस्य तत् स्यात्” (भाग.पुरा.11।23।56) इति. प्रकाशग्रहणं धर्मत्वद्योतनाय. दुःखादयोऽपि ब्रह्मधर्मा इति. अतो द्वैतबुद्ध्या अंशस्यैव दुःखित्वं न परस्य.
अथवा प्रकाशः प्रकाश्यदोषेण यथा न दुष्टः, रूपस्यापि (‘पापस्यापि’ इति पुरु.पाठः) तदंशत्वाद् इति॥46॥
स्मरन्ति च॥47॥
स्मरन्ति च सर्वेऽपि ऋषयो अंशिनो दुःखासम्बन्धं स्मरन्ति.
“तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः,
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा”(महाभा.शान्तिप.351।14) इति.
“कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते” (तत्रैव 351।15)
“एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः”(कठोप.2।5।11)
‘च’कारात्, “तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्यो अभिचाकशीति” (श्वेता.उप.4।6) इति॥47॥
अनुज्ञापरिहारौ देहसम्बन्धाद् ज्योतिरादिवत्॥48॥
ननु जीवस्य भगवदंशत्वे विधिविषयत्वाभावात् कर्मसम्बन्धाभावेन कथं फलसम्बन्धः? जीवस्य च पुनः अनेकदेहसम्बन्धात् कः शूद्रः, का भार्या इति ज्ञानमपि अशक्यम् अतः कर्ममार्गस्य व्याकुलत्वात् कथं जीवस्यापि दुःखित्वम्? इति आशङ्क्य परिहरति.
अनुज्ञापरिहारौ विधिनिषेधौ, जीवस्य देहसम्बन्धाद् यो देहो यदा गृहीतः तत्कृतौ. यथा शवाग्निः, चण्डालभाण्डस्थम् उदकं तद्धटादिश्च परिह्रियते एवम् उत्कृष्टं परिगृह्यते तथा जीवेऽपि देहसम्बन्धकृतः. सम्बन्धश्च आध्यासिको भगवत्कृतश्च. आध्यासिको हि ज्ञानाद् निवर्तते, द्वितीयो भगवतैव. जीवन्मुक्तानामपि व्यवहारदर्शनात्. श्रुतिस्तु भगवत्कृतसम्बन्धमेव आश्रित्य अग्निहोत्रादिकं विधत्ते. अन्यथा विद्यां स्वज्ञानं च बोधयन्ति कर्माणि न विदध्यात्, शाब्दज्ञानस्य पूर्वमेव सिद्धत्वात्. कथं सिद्धवद् यावज्जीवं विदध्यात्? न्यासोऽपि देहसम्बन्धएव॥48॥
असन्ततेश्चाव्यतिकरः॥49॥
ननु देहस्यापि बाल्य-कौमारादिभेदात् कथं कर्मकाले ब्राह्मणत्वादि? जीवैक्याद् इति चेद्, देहान्तरेऽपि स्याद् इति, तत्र आह देहान्तरे सन्ततिरपि नास्ति. बाल्यादिभेदे पुनः सन्ततिः

एका. अतः सन्ततिभेदाद् न कर्मणां साङ्कर्यम् इति॥49॥
आभासएव च ॥50॥
ननु सच्चिदानन्दस्य ब्रह्मणो अंशः सच्चिदानन्दएव भवेद् अतः कथं प्रवाहे प्रवेशो भगवतश्च सर्वकार्याणि? तत्र आह आभासएव जीवः. आनन्दांशस्य तिरोहितत्वात्. 'च'काराद् आकारस्यापि अभावः. नतु सर्वथा प्रतिबिम्बवद् मिथ्यात्वं "जलचन्द्रवद्" इति एकस्य अनेकत्वे दृष्टान्तः. तथा सति अध्यासश्च स्वस्य न स्यात्. तत्र वृत्त्यादिदोषप्रसङ्गश्च. अतो न मिथ्यात्वरूप आभासो अत्र विवक्षितः॥50॥
अदृष्टानियमात्॥51॥
ईशित्वाय नैयायिकाद्यभिमतं जीवरूपं निराकरोति. "नानात्मानो व्यवस्थात" (वै.सू.2।2।20) इति भोगव्यवस्थया जीवनानात्वम् अङ्गीकृतम्. तत्र अदृष्टस्य नियामकत्वं तन्मते सिद्धम्. देशान्तरवस्तूत्पत्यन्यथानुपपत्या व्यापकत्वं च अङ्गीकृतम्. एवञ्च क्रियमाणे मूलएव कुठारः स्यात्. सर्वेषामेव जीवानाम् एकशरीरसम्बन्धात् कस्य अदृष्टं तद् भवेत्?
नच मिथ्याज्ञानेन व्यवस्था. तत्रापि तथा. नच अनुपपत्या परिकल्पनम्. श्रुत्यैव उपपत्तेः. एतेन विरोधाद् ऋषिप्रामाण्यमपि निराकृतम् ॥51॥
अभिसन्ध्यादिष्वपि चैवम्॥52॥
ननु मनःप्रभृतीनां नियामकत्वात् तेषाम् ईश्वरेच्छया नियतत्वाद् न दोषः इति चेद्, न, पूर्ववदेव दोषप्रसक्तिः. तादृशेश्वरकल्पना च पूर्वमेव निराकृता॥52॥
प्रदेशाद् इति चेद् न, अन्तर्भावात्॥53॥
आत्मनो विभुत्वेऽपि प्रदेशभेदेन व्यवस्था. आत्मनि तादृशः प्रदेशविशेषो अस्ति येन सर्वम् उपपद्यते इति चेद्, न, अन्यस्यापि प्रदेशः तत्र अन्तर्भवति. तस्यैव वा देहस्य देशान्तर्गमने पूर्वदेशस्य त्यक्तत्वात् सो अंशो अन्तर्भवेत् तिरोभवेद् इति॥53॥
इति द्वितीयाध्याये तृतीयपादे अंशो नानाव्यपदेशाद् इति षोडशम्अधिकरणम्॥16॥
इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
द्वितीयाध्यायस्य तृतीयः पादः॥

## *द्वितीयो अध्यायः चतुर्थः पादः*

### तथा प्राणः॥1॥ (2।4।1)
जीवशरीरमध्यवर्तिनां प्राणादीनां विचारार्थं पादारम्भः. तत्र जीवं निरूप्य तादृशधर्मवत्वं प्राणे अतिदिशति. 'प्राण'शब्दप्रयोगः प्रियत्वाय, प्राणाः इन्द्रियाणि. मनसो मुख्यत्वाद् एकवचनम्. "उत्क्रान्तिगत्यागतीनाम्" (ब्रह्मसू. 2।3।19) इत्यारभ्य सर्वोपपत्तिः अत्र अतिदिष्टा,

चिदंशस्यापि तिरोभावइति पृथग् निरूपणम्. ननु तद्गुणसारत्वादयः कथम् उपदिश्यन्ते? इति चेद्, न. सत्यम्, अस्ति तत्रापि, "ये प्राणं ब्रह्मोपासते" (तैत्ति.उप.2।3) इति॥1॥

गौण्यसम्भवात्॥2॥

ननु उत्क्रान्त्यादिश्रुतिः गौणी भविष्यति न, गौण्यसम्भवात्. सा श्रुतिः गौणी न सम्भवति. एकैव श्रुतिः जीवे मुख्या प्राणे गौणी इति कथं सम्भवति?॥2॥

तत्प्राक्श्रुतेश्च॥3॥

जडत्वेन अधिकविचारो अत्र क्रियते. सृष्टेः पूर्वमपि प्राणादीनां स्थितिः श्रूयते. "असद्वा इदमग्र आसीत् तदाहुः, किं तदसदासीद्? इत्यृषयो वा व ते अग्रे असदासीत् तदाहुः. के ते ऋषयः? प्राणा वा ऋषयः" (बृहदा.उप.2।2।3) इति. ननु "सदेव सोम्येदमग्र आसीद् एकमेवाद्वितीयम्" (छान्दो.उप.6।2।1) इति विरोधः इति चेद्, न. स्वरूपोत्पत्तिरेव अत्र निषिध्यते जीववद्, नतु उद्गमः. उद्गमात् पूर्वन्तु "सदेव" इति श्रुतिः. 'च'कारात् मोक्षे तस्यापि सम्पत्तिः श्रूयते स्थलान्तरे. "एतस्माज् जायते प्राणो मनः सर्वेन्द्रियाणि च" (मुण्ड.उप.2।1।3) इति श्रुतिः विस्फुलिङ्गसदृशी॥3॥

तत्पूर्वकत्वाद् वाचः॥4॥

"मनः पूर्वरूपं वागुत्तररूपम्" (ऐत.उप.1।1।2 ) इति. "तस्य यजुरेव शिरः" (तैत्ति.उप.2।3) इति. तथाच वेदानां स्वतः उत्पत्यभावात् तत्पूर्वरूपमनसः कथम् उत्पत्तिः?॥4॥

सप्तगतेर्विशेषितत्वाच्च॥5॥

"तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति"(बृहदा.उप.4।4।2) इति. पूर्वोक्तानां चक्षुरादीनाम् "अथारूपज्ञो भवतीत्येकीभवति न पश्यतीत्याहुः" (तत्रैव 4।4।2) इत्यादिभिः जीवगतिः सप्तानां गतिभिः विशेष्यते. सप्तगतयः तेन विशेषिताः एकीभवति इति. अतो जीवसमानयोगक्षेमत्वाद् जीवतुल्यता इति. 'च'कारात् तत्तदुपाख्यानेषु चक्षुःप्रभृतीनां देवतात्वं संवादश्च. अतः चेतनतुल्यत्वम्॥5॥

इति द्वितीयाध्याये चतुर्थपादे प्रथमं तथा प्राणः इति अधिकरणम्॥1॥

केचिद् इदं सूत्रम् उत्तरसूत्रपूर्वपक्षत्वेन योजयन्ति. तत्र अयम् अर्थः : ते प्राणाः कति? इति आकाङ्क्षायां,

"सप्त प्राणाः प्रभवन्ति तस्मात् सप्ताऽर्चिषः समधिः सप्तजिह्वाः" (मुण्ड.उप.2।1।8),

"अष्टौ ग्रहाः अष्टावतिग्रहाः" (बृहदा.उप.3।2।1) इति.

"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' (तैत्ति.संहि.5।3।2।5)इति.

"नव वै पुरुषे प्राणा नाभिर्दशमी" (तत्रैव 5।3।2।3),

"दश वै पशोः प्राणाः आत्मैकादशः" (तत्रैव 6।3।10।3)

इत्येवमादिषु नानासङ्ख्या प्राणानां प्रतीता. तत्र श्रुतिविप्रतिषेधे किं युक्तम्? इति संशये सप्तैव इति प्राप्तम्. कुतः? गतेः. सप्तानामेव गतिः श्रूयते. "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त" (मुण्ड.उप. 2।1।8) इति. किञ्च विशेषितत्वाच्च.

जीवस्य उत्क्रमणसमये सप्तानामेव विशेषितत्वम्. अन्येतु पुनः एतेषामेव वृत्तिभेदाद् भेदाः इत्येवं प्राप्ते उच्यते.

## हस्तादयस्तु स्थिते अतो नैवम्॥6॥ (2।4।2)

पूर्वसम्बन्धे उत्सूत्रं पूर्वपक्षः. 'तु'शब्दः पूर्वपक्षं व्यावर्तयति. हस्तादयः सप्तभ्यो अधिकाः. "हस्तौ चादातव्यं च, उपस्थश्चानन्दयितव्यं च, पायुश्च विसर्जयितव्यं च, पादौ च गन्तव्यं च" (प्रश्नोप.4।8) इति. चक्षुरादिगणनायाम् एतेऽपि चत्वारः इन्द्रियत्वेन गणिताः. स्थिते सति श्रुतौ गणनया चक्षुरादितुल्यत्वे सति. अतो हेतोः. सप्तैव इति न, किन्तु एकादश. अवान्तरगणना सूचनया असम्भवाभिप्राया अधिकसंख्या अन्तःकरणभेदाद् इति. एकादशैव इन्द्रियाणि इति स्थितम्॥6॥

इति द्वितीयाध्याये चतुर्थपादे द्वितीयं हस्तादयः इति अधिकरणम्॥2॥

## अणवश्च॥7॥ (2।4।3)

सर्वे प्राणाः अणुपरिमाणाः. गतिमत्त्वेन नित्यत्वे अणुत्वमेव. परिमाण-प्रमाणाभावात् पुनर्वचनम्॥7॥

द्वितीयाध्याये चतुर्थपादे तृतीयम् अणवश्च इति अधिकरणम्॥3॥

## श्रेष्ठश्च॥8॥ (2।4।4)

मुख्यश्च प्राणो नित्यगतिमान् अणुपरिमाणश्च. 'च'काराद् अतिदेशः. "न असदासीद्" (ऋग्वेद 10।129) इत्यत्र "आनीदवातं स्वधया तदेकम्" (तत्रैव 10।129) इति अननात्मकस्य पूर्वसत्ता प्रदर्शिता॥8॥

न वायुक्रिये पृथगुपदेशात्॥9॥

ननु मुख्यः प्राणो वायुरेव भविष्यति, इन्द्रियाणां क्रिया वा. एवं हि श्रूयते "यः प्राणः स वायुः. एष वायुः पञ्चविधः"(ऐत.उप.3।3।2) "प्राणोपानो व्यान उदानः समानः" (बृहदा.उप.1।5।3) इति.

"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" (साङ्ख्य.कारि.29) इति तन्त्रान्तरीया आचक्षते. तद् उभयमपि न. कुतः? पृथगुपदेशात्. "एतस्माज् जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" (मुण्ड.उप.2।1।3) इति प्राणवाय्वोः पृथगुपदेशात् वृत्तिमतोः अभेदेन ततोऽपि पृथगुपदेशाच्च॥9॥

इति द्वितीयाध्याये चतुर्थपादे चतुर्थं श्रेष्ठश्च इति अधिकरणम्॥4॥

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः॥10॥ (2।4।5)

सः प्राणः स्वतन्त्रः, परतन्त्रो वा? इति विचारे स्वतन्त्रः इति तावत्प्राप्तम्. "सुप्तेषु वागादिषु प्राणः एको *मृत्युनानाप्तः, प्राणः संवर्गो वागादीन् संवृङ्क्ते, प्राण इतरान् प्राणान् रक्षति

मातेव पुत्रान्” (...........) इति.
इमाम् आशङ्कां निराकरोति ‘तु’शब्दः. चक्षुरादिवद् अयमपि प्राणो अस्वतन्त्रः. मुख्यतो भगवदधीनः. व्यवहारे जीवाधीनः. कुतः? तत्सहशिष्ट्या-दिभ्यः चक्षुरादिभिः सह शासनात्. इन्द्रियजयवत् प्राणजयस्यापि दृष्टत्वात्. ‘आदि’शब्देन जडत्वादयः॥10॥
अकरणत्वाच्च न दोषः तथा हि दर्शयति॥11॥
ननु प्राणस्य जीवोपकरणत्वे तदुपकारकव्यापारवत्त्वम् अपेक्ष्यते. तत्र एकादशैव वृत्तयः तन्त्रान्तरेऽपि सिद्धाः.
“एकादशामी मनसो हि वृत्तय आकूतयः पञ्चधियोऽभिमानः,
मात्राणि कर्माणि पुरं च तासां वदन्ति चैकादश वीर भूमीः”
(भाग.पुरा.5।11।9) इति. तथा कश्चित् प्राणस्य व्यापारो अस्ति इति चेद्, न एषः दोषः. कुतः? अकरणत्वात्. करणस्यैव हि व्यापारो अपेक्षितः. अन्यस्य कार्यमात्रम् अपेक्षितम्. तत्र आह तथा हि. कार्यवत्त्वं युक्तम्. तत् श्रुतिरेव दर्शयति. “तस्मिन् उत्क्रामत्यथेतरे” (प्रश्नोप.2।4) इत्यादिश्रुतिभिः प्राणनिमित्तैव शरीरस्थितिः इति. तस्माद् व्यापाराभावेऽपि स्वरूपस्थितिमात्रेण तस्य उपकारित्वम्॥11॥
पञ्चवृत्तेर्मनोवद् व्यपदिश्यते॥12॥
व्यापारव्यतिरेकेण उपकारित्वम् असमञ्जसम् इति चेद्, तत्र आह पञ्च-वृत्तेः. “अहमेव एतत्पञ्चधा आत्मानं विभज्य एतद्बाणम् अवष्टभ्य विधार-यामि” (प्रश्नोप.2।3) इति यथा मनसो द्वारभेदेनैव एकादश वृत्तयः स्वरूपतएव एवमेव प्राणस्यापि पञ्चधा आत्मानं विभज्य कार्यकारणं व्यपदिश्यते॥12॥
अणुश्च॥13॥
अतिदेशेन प्राप्तमपि अणुत्वं “पञ्चधा आत्मानं विभज्य” (प्रश्नोप. 2।3) इतिवचनात् सन्दिग्धं पुनः विधीयते. आसन्योऽपि अणुः. ‘च’कारात् पूर्वोक्तसर्वसमुच्चयः॥13॥
इति द्वितीयाध्याये चतुर्थपादे पञ्चमं चक्षुरादिवद् अधिकरणम्॥5॥

## ज्योतिराद्यधिष्ठानं तु तदामननात्॥14॥ (2।4।6)

वागादीनां देवताधिष्ठानवतां प्रवृत्तिः, स्वतएव वा? जीवाधिष्ठान-ब्रह्मप्रेरणयोः विद्यमानत्वादिति संशयः. विशेषकार्याभावाद् न देवतापेक्षेति पूर्वपक्षं निराकरोति ‘तु’शब्दः. वागादीनां ज्योतिरादिः अग्न्यादिः अधिष्ठानम् अवश्यम् अङ्गीकर्तव्यम्. कुतः? तदामननात्. तथा आम्नायते “अग्निर् वाग् भूत्वा मुखं प्राविशद्” (ऐत.उप.2।4) इत्यादि.
अयम् अर्थः :
“योऽध्यात्मिको अयं पुरुषः सोऽसावेव आधिदैविकः,
यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः” (भाग.पुरा.2।10।8) इति आध्यात्मिकादीनां स्वरूपं, वागादयश्च अणुरूपा नित्याः.

तत्र यदि त्रैविध्यं न कल्प्येत तदा एकस्मिन्नैव शरीरे उपक्षीणं शरीरान्तरे न भवेत्. कल्प्यमानेतु अग्निर् देवतारूपो अनेकरूपभवनसमर्थो वाग्रूपो भूत्वा सर्वत्र प्रविष्टः इति सङ्गच्छते. ते च अग्न्यादयः चेतना भगवदंशाः तिरोहितानन्दाः सामर्थ्ययुक्ता इति कार्यवशाद् अवगम्यन्ते. आध्यात्मिकाधिदैविकयोः एकत्वाद् वदनादिकार्यार्थम् आध्यात्मिकाएव निरूपिताः. उद्गमने, "एतस्माज् जायते प्राणः"(मुण्ड.उप.2।1।3) इत्यादिषु वागादीनां नियमेन तत्तज्जीवसान्निध्यं, स्वतश्च अनिर्गमनं मृत्युरूपश्रमेण तत्र लयः पुनः उद्गमनं समष्टि-व्यष्टिभावश्च अन्यथा न उपपद्येत. आधिभौतिककृतश्च अयं भेदः इति अग्रे व्यक्तीकरिष्यते. एवमेव ब्रह्मणोऽपि. "अनेन जीवेन आत्मनानुप्रविश्य" (छान्दो.उप.6।3।2) इत्यपि निःसन्दिग्धं द्रष्टव्यं यदज्ञानात् सर्वविप्लववादिव्यामोहः॥14॥
इति द्वितीयाध्याये चतुर्थपादे षष्ठं ज्योतिराद्यधिष्ठानाधिकरणम्॥6॥

## प्राणवता शब्दात्॥15॥ (2।4।7)

यद् अधिष्ठानम् अग्न्यादि तत् किं स्वतएव, अन्यसहितं वा? इति सन्देहः. किं तावत् प्राप्तम्? स्वतएव इति, पूर्वोक्तन्यायेन तावतैव सिद्धेः, अनवस्थानाच्च, देवतात्वव्याघातश्च इत्येवं प्राप्ते उच्यते. प्राणवता अधिष्ठितं वागादि. कुतः? शब्दात्. "सो अयम् अग्निः परेण मृत्युना अतिक्रान्तो दीप्यते" (बृहदा.उप.1।3।12) इत्यादि. अयम् अर्थः : "द्वया ह प्राजापत्याः" (तत्रैव 1।3।1) इत्यत्र *अधिष्ठातृत्वम् अग्नीनाम् उक्तम्. देवाः इति अविशषेण इन्द्रियाधिष्ठात्र्योः अन्याश्च. तेषां प्रतिबन्धकासुरातिक्रमेण स्वर्गलोके गमनेच्छा बभूव. तत्र "यज्ञेनैव स्वर्गः" इति. तत्र "जनको ह वैदेह"(बृहदा.उप.3।1।1) इति ब्राह्मणे "केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते? इति उद्गात्रर्त्विजा वायुना प्राणेन" (तत्रैव 3।1।6) इति उद्गात्रैव आक्रमणम् इति सिद्धम्. तत्र अन्योऽन्योद्गातृत्ववरणे तथा उद्गाने "यो वाचि भोगः तं देवेभ्यः" (तत्रैव1।3 ।2) इति आम्नातम्. तदनु श्रमरूपपाप्मना वेधानन्तरम् अप्रतिरूपं वदति इति निरूपितम्. सोऽपि दोषो देवानां प्राप्नोति. तत् श्रुतिविप्रतिषिद्धम्. "न ह वै देवान् पापं गच्छति" (तत्रैव 1।5।20) इति. तदनु प्राणएव उद्गाता सिद्धः. तेन अन्येषामपि पापसम्बन्धो निवारितः. ततः परेण तस्य "मृत्युम् अतिक्रान्तो दीप्यते" (तत्रैव1।3।12) इति. अतो दीप्यमानस्यैव अधिष्ठातृत्वात् प्राणवतैव अधिष्ठानम् इति सिद्धम्॥15॥
तस्य च नित्यत्वात्॥16॥
अग्न्यादेः प्राणसम्बन्धो नित्यइति सर्वदा अधिष्ठातृत्वम्. प्राणस्य तत्सम्बन्धस्य च इति 'च'कारार्थः. प्राणसहायेनैव यथोचितवर्णोद्गमः इति. लोके स्वामि-भृत्यन्यायेन जीवे भोगः फलिष्यति॥16॥
इति द्वितीयाध्याये चतुर्थपादे सप्तमं प्राणवता इति अधिकरणम्॥7॥

## तदिन्द्रियाणि तद्व्यपदेशाद् अन्यत्र श्रेष्ठात्॥17॥ (2।4।8)

इदम् अत्र विचार्यते : इन्द्रियाणां प्राणाधीनसर्वव्यापारत्वात् तन्नामव्यपदेशाच्च प्राणवृत्तिरूपाणि इन्द्रियाणि, तत्त्वान्तराणि वा? इति संशयः. तत्त्वान्तराण्येव इति सिद्धान्तः. तानि इन्द्रियाणि तत्त्वान्तराणि. कुतः? तद्व्ययपदेशात्. 'इन्द्रिय'शब्देन व्यपदेशात्. "एतस्माज् जायते प्राणो मनः सर्वेन्द्रियाणि च" (मुण्ड.उप.2।1।3) इति भिन्नशब्दवाच्यानां क्वचिद् एकशब्दवाच्यत्वेऽपि न एकत्वम्. आसन्येऽपि तर्हि भेदः स्याद् इत्यतः आह अन्यत्र श्रेष्ठात्. तस्य ते यौगिकाः शब्दाः इति॥17॥

भेदश्रुतेः॥18॥

यत्रापि 'प्राण'शब्दप्रयोगः तत्रापि भेदेन श्रूयते. "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति. प्राणम् अनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृहदा.उप. 4।4।2) इति॥18॥

वैलक्षण्याच्च॥19॥

वैलक्षण्यं च प्राणस्य च इन्द्रियाणां च. सुप्तेषु वागादिषु प्राणो जागर्ति. स्वामि-सेवकवच्च अनेकं वैलक्षण्यम्॥19॥8॥

इति द्वितीयाध्याये चतुर्थपादे अष्टमं तदिन्द्रियाधिकरणम्॥8॥

## सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्॥20॥ (2।4।9)

भूत-भौतिकसृष्टिः परमेश्वरादेव इति निर्णीय नामरूपव्याकरणमपि परमेश्वरादेव इति निश्चयार्थम् अधिकरणारम्भः. लोके नामरूपकरणं कुलालादिजीवेषु प्रसिद्धमिति अलौकिकेऽपि स्थावरजङ्गमे 'मयूरा'दिसञ्ज्ञां मूर्तिं च जीवादेव हिरण्यगर्भादेः भविष्यतीति वह्न्यादिदेवानां जीवरूपाणामेव वागादिरूपेण अनुप्रवेशात् तत्साहचर्येण नामरूपयोरपि जीवएव कर्ता भविष्यति इति आशङ्कां निराकरोति 'तु'शब्दः.

सञ्ज्ञा-मूर्त्योः क्लृप्तिः नामरूपयोः निर्माणम्. त्रिवृत्कुर्वतः यः त्रिवृत्करोति तस्मात्. "सेयं देवतैक्षत हन्ताहम् इमास्तिस्रो देवता अनेन जीवेन आत्मनानुप्रविश्य नामरूपे व्याकरवाणि" (छान्दो.उप.6।3।2) इति. "तासां त्रिवृतं त्रिवृतम् एकैकं करवाणि" (तत्रैव 6।3।3) इति त्रिवृत्कर्ता परमेश्वरः. सएव नाम-रूपयोरपि कर्ता. कुतः? उपदेशात्. उप समीपे एकवाक्ये उभयकरणस्य प्रतिज्ञानात्. जीवस्यतु त्रिवृत्करणानन्तरं शरीरसम्बन्धे कर्तृत्वात्. तस्मात् नामरूपप्रञ्चस्य भगवानेव कर्ता इति सिद्धम्॥20॥

इति द्वितीयाध्याये चतुर्थपादे नवमं सञ्ज्ञामूर्तिक्लृप्तिः इति अधिकरणम्॥9॥

## मांसादि भौमं यथाशब्दम् इतरयोश्च॥21॥ (2।4।10)

इदम् इदानीं विचार्यते.

"अन्नम् अशितं त्रेधा विधीयते. तस्य यः स्थविष्ठो धातुः तत् पुरीषं भवति, यो मध्यमः तन् मांसं, योऽणिष्ठः तन् मनः. आपः पीतास्त्रेधा विधीयन्ते. तासां यः स्थविष्ठो धातुः तन्मूत्रं, यो

मध्यमः तल्लोहितं, योऽणिष्ठः स प्राणः. तेजो अशितं त्रेधा विधीयते. तस्य यः स्थविष्ठो धातुः तदस्थि भवति, यो मध्यमः सा मज्जा, योऽणिष्ठः सा वाक्. अन्नमयं हि सौम्य मनः आपोमयः प्राणः तेजोमयी वाक्" (छान्दो.उप.6।5।1) इति. तत्र संशयः : वाक्-प्राण-मनांसि किं भौतिकानि आहोस्वित् स्वतन्त्राणि? इति. "एतस्माज् जायते प्राणो मनः सर्वेन्द्रियाणि च" (मुण्ड.उप.2।1।3) इति श्रुतिविप्रतिषेधात् संशयः. त्रिवृत्करणप्रसङ्गेन उदिताम् आशङ्कां निराकरोति. तत्र पूर्वपक्षम् आह. मांसादि भौमं, पुरीषमांसादि तेजोऽबन्नप्रकृतिकम्. कुतः? यथाशब्दम्. "अन्नम् अशितम्" इत्यादिश्रुतितो निःसन्दिग्धं प्रतिपादनात्. किम् अतो यदि एवं तद् आह इतरयोश्च. वाचि तुल्यत्वाद् न सन्देहः. इतरयोः मनःप्राणयोरपि भौतिकत्वं यथाशब्दम्. उद्गमश्रुतिस्तु स्तुतित्वेन अनुवादपरा भविष्यति, उपपादकश्रुतिबाधात्. तस्माद् भौतिकान्येव मनःप्रभृतीनि इत्येवं प्राप्ते उच्यते॥21॥

वैशेष्यात्तु तद्वादः तद्वादः॥22॥

अन्नादिभिः विशेष्यते मनःप्रभृति सम्यक् कार्यक्षमं भवति. तथादर्शनाद् उपादानाच्च. अतो वैशेष्यादेव हेतोः अन्नमयत्वादिवादः.

ननु कथम् एतद् अवगम्यते?

वैशेष्याद् गौणो वादः इति उच्यते. अथ "आत्मने अन्नाद्यम् अगायद्" (बृहदा.उप.1।3।17) इत्यत्र प्राणएव सर्वस्य अन्नस्य अत्ता निर्दिष्टः.

सः कथं तत्परिणामकार्यं स्यात्?

वागादयश्च तत्र अन्नार्थम् अनुप्रविष्टाः, सृष्टौ प्रथमतो भिन्नतया निर्देशात्. अतो न भौतिकानि मनःप्रभृतीनि, किन्तु तत्त्वान्तराणि इति सिद्धम्. तद्वादः इति वीप्सा अध्यायसमाप्तिसूचिका॥22॥

इति द्वितीयाध्याये चतुर्थपादे दशमं मांसादिभौमम् इति अधिकरणम्॥10॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये

द्वितीयाध्यायस्य चतुर्थः पादः॥

समाप्तो अयं द्वितीयोध्यायः